சற்றும் அலுக்காமல் படித்து மகிழ இக்காப்பியம் நம்மை தூண்டுவதே இதன் தனிச்சிறப்பு. முழுநூலில் காணப்பெறும் கதைப்பகுதி வருணனைகளில் சிலபகுதி மட்டுமே தமிழில் சுருக்கிக் கொடுக்கப் பட்டுள்ளது. முன்னுரையில் கூறப்பட்டவாறு இந்நூல் காவிய லக்ஷணங்கள் அனைத்தும் கொண்டுவிளங்குகிறது. இந்தநூல் ஸம்ஸ்க்ருத மொழி பாடநூலாகப் பள்ளிகளிலும், கல்லூரிகளிலும் வைப்பதற்கு ஏற்றவாறு - சிறிய விருத்தங்களுடனும் (சந்தங்கள்) எளிய சொற்களுடனும், கருத்தாழமுடனும் அமைந்துள்ளது.

இந்நூலாசிரியர் - கவி பகவந்தர் இயற்றிய வேறு இரு நூல் களை நமது நூல்நிலையம் முன்னரே பதிப்பித்து வெளியிட்டிருக்கும் நிலையில், அவருடைய மூன்றாவதான இந்நூலை வெளியிடுவதன்மூலம் ஒரு கவியினுடைய அனைத்துப் படைப்புக்களையும் அறிஞர் உலகம் படித்தின்புற உதவியாக அமையும். மேலும், இவ்வாசிரியர் நம் தஞ்சை அரசர் தொடர்புள்ளவர் என்பதால், நம் நூல் நிலயம் இவரை வெளியுலகத்திற்கு அறிமுகப்படுத்திப் பெருமைகொள்வது பொருத்தம் தான் !

## இந்நூலைப் பதிப்பித்துள்ள முறைபற்றி

தஞ்சாவூர் மஹாராஜா சரபோஜி ஸரஸ்வதி மஹால் நூல் நிலயத்தின் ஸம்ஸ்கிருதப் பிரிவில் முழுமையாகக் கிடைக்கப்பெற்ற காகிதச்சுவடி Book No. 482 (No. 10303) ல் சுவடி எண் 10275 D. 3719 ஐ அடிப்படையாகக்கொண்டு இந்நூல் பதிப்பிக்கப்பெறு கிறது. ஆங்கிலத்திலும், ஸம்ஸ்கிருதத்திலும் மிகமிகச் சுருக்கமான குறிப்புகளே கொடுக்கப்பட்டுள்ளன வென்றாலும், ஓரளவுக்கு இந்நூலில் கூறப்பட்டுள்ள சுலோகக் கருத்துக்களைச் சற்றே விரிவாகப் பொது

மக்களுக்கு அறிமுகப்படுத்தும் வகையில் முன்னுரை தமிழில் தயாரிக்கப்பட்டுள்ளது. முழு வருணனைகளையும் விவரித்தால் முன்னுரை விரியும் எனக்கருதி சில சுலோக வருணனைகளே தமிழில் கொடுக்கப்பட்டுள்ளன. பிழைகள் மலிந்த மூலச்சுவடியில் ஒருசில இடங்கள் முழுமைபெறுமலிருக்கின்றன. அவற்றைவிடுத்து சாத்யமான திருத்தங்கள் செய்ய முயற்சி மேற்கொள்ளப்பட்டிருக்கிறது.

## நன்றியுரை

வெளியுலகில் அதிக அறிமுகமாகாத ஓர் மாபெரும் புலவரின் இவ்வரியநூலை அச்சில்கொண்டுவரும் பணியை அடியேனுக்கு நல்கிய மாவட்ட ஆட்சித்தலைவரும், நூலக (பொ) இயக்குநருமாகிய உயர்திரு V. K. ஜயக்கொடி, I.A.S., அவர்களுக்கும், நூலக நிர்வாக அதிகாரி (பொ) திரு K. சங்கரநாராயணன் அவர்களுக்கும், நூலக வெளியீட்டு மேலாளர் மற்றும் நூலகர் திரு. அ. பஞ்சநாதன், M.A., M.L.I.S., அவர்களுக்கும், அடியேனல் தயாரிக்கப்பட்ட நூலின் பிரஸ் காப்பியை மூலச் சுவடிகொண்டு ஒப்பிட்டுப் பிழைத் திருத்தம் செய்தும், நூல் முழுவடிவம்பெறும் விதத்தில் சுலோகங்களை அகர வரிசைப்படுத்தி எழுதியும் அச்சுப்பிரதிகளைத் (Proof) திருத்திக் கொடுத்தும் உதவி புரிந்த இந்நூலக மேநிலை ஸம்ஸ்க்ருத பண்டிட், சிரோமணி, தேதியூர் ப்ரம்மஸ்ரீ S. கிருஷ்ணமூர்த்தி சாஸ்திரிகள் அவர்களுக்கும், எனது மனமார்ந்த நன்றியைத் தெரிவித்துக் கொள்கிறேன்.

மற்றும் இந்நூல் சிறப்பாக வெளிவர உதவிய நூலக அனைத்து அலுவலர்களுக்கும், பண்டிதர்களுக்கும் என் நன்றி உரித்தாகுக

இந்நூலைச் சிறப்பாக அச்சிட்டளித்த தஞ்சாவூர் ஸ்டார் பிரிண்ட் அண்ட் பேக் நிறுவனத்திற்கும் என் நன்றி உரியது.

பண்டைய ஸம்ஸ்க்ருத இலக்கியங்களுடன் ஒப்பிடத்தக்க விதத்தில் அமைந்துள்ள சிறப்புமிகுந்த இந்தக் காவியநூலை ஸம்ஸ்க்ருத மொழி கற்கும் அனைத்துப் பிரிவினரும், பண்டிதப் பெருமக்களும் போற்றி வரவேற்பர் என்பதில் சிறிதும் ஐயமில்லை.

கவிதல்லஜ என். வேங்கடரமணன், B.Com.,

ஸாஹித்ய சிரோமணி,

சிறப்புக் கேண்மைப் பதிப்பாசிரியர்,

சரஸ்வதி மஹால் நூலகம்.

மேலவீதி,

தஞ்சாவூர்-9,

18-12-95.



## ॥ प्रस्तावना ॥



"भारते मानवं जन्म प्राप्य भागवतं न यैः ।
श्रुतं पापपराधीनैरात्मघातस्तु तैः कृतः" ॥

इति श्रीमद्भागवते संदृश्यमानमुद्धववचनं पठतां शृण्वतां भारतीयजनानामस्माकं न केवलं स्पृशति मानसं, कम्पयति कलेबरं, रोमाञ्चयति रोमकूपान्, तनोति पश्चात्तापं, चोदयति च जागृतिं, प्रददात्येव सुदृढाश्वासमिमं यत् भागवतपठनश्रवणादिकमस्मान् संसारसागरस्य पारं नयेदिति ॥

"तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गळं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः" ॥

इति गोपिकाभिः श्रीकृष्णकथामाहात्म्यं सुस्वरेणालापरोदनेनाविष्कृतमिति सर्वेऽपि जानन्त्येव ॥ भगवान् व्यासोऽप्याह्वयति रसिकतल्लजान् निगमकल्पतरोर्गलितं शुकमुखादमृतद्रवसंयुतं च भागवतफलमास्वादयितुम् ॥ कथमुद्भूतः

स्फुरदानन्दानुभवः भगवतो व्यासस्य ? स एव स्वयं प्रथमस्कन्धे विशदीकरोति कारणमस्य ।। अष्टादशपुराणानि, उपपुराणानि, महाभारतं - इति सर्वमपि परलक्षश्लोकैर्विरचितं मया । तथाऽपि नात्मा परितुष्यते मे ।। किन्नु करवै ? "किं वा भागवता धर्मा न प्रायेण निरूपिताः । प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः" ।। इति खिद्यन्त तमुवाच नारदः

**"यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः**
**न तथा वासुदेवस्य महिमा ह्यनुवर्णितः"** ।। इति

एवमुद्बोधितो भगवान् व्यासः इहामुत्राभ्युदयकरं श्रीकृष्णचरितं व्यरचयत्, लेभे चपरमामात्मतृप्तिम् ।। कोऽसौ भगवान् व्यासः ? श्रीमन्नारायणांश एव सः ।। अत एव गीयते "व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे" इति, "शङ्करं शङ्कराचार्यं केशवं बादरायणमिति" च ।। विष्णोरंशभूतस्यापि व्यासस्य श्रीकृष्णचरितं सुखकरमासीत् !! तथैव, "ममापि तद्भूतिकरं प्रचक्षते महानुभावं चरितं निबोधत" -इति श्रीरामचन्द्रस्य वचनं सुस्पष्टं निवेदयति रामायणकथा तस्यापि श्रेयस्करी विराजते स्म इति ।।

इतिहासपुराणसारज्ञः भगवन्तरायमखी निजरसनापरिशुद्धये, आत्मनो मनःप्रसादाय, लोककल्याणाय चानुगृहीतवान् श्रीकृष्णचरितवर्णनात्मकं काव्यरत्नम् ॥ किञ्च, मोक्षमिच्छेद्जनार्दनात्, मोक्षं ददातीति मुकुन्दः इत्यादिसूक्तीरनुचिन्त्य स्वकाव्यस्य "मुकुन्दविलास" इति नाम सार्थकं चकार ॥

किं वा काव्यं ? को वा कविः ? किं वा काव्यलक्षणम् ? उच्यते ॥

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा" ॥

इति खलु अग्निपुराणवचनम् ॥ कुतो वा भवति दुर्लभा काव्यनिर्माणशक्तिः ? यतः, काव्यस्य शब्दार्थौ शरीरं, रीतयः अवयवसंस्थानविशेषाः, रसादिः आत्मा, गुणाः शौर्यादयः, अलङ्काराः कटककुण्डलादिभूषाविशेषाः, औचित्यं प्राणाः, ध्वनिः रक्तनालिका च विराजन्ते । वृत्तलक्षणमनुसृत्य साधारणश्लोकरचनमेव दुष्करं चेत्, पुर्वोक्तरीत्या को वा शक्नुयात् निरवद्यां, सजीवां सरसां सालङ्काराञ्च

कवितावनितां जनयितुम् ? इदं तु कर्म न सामान्यम् ॥
अत एव भगवान् व्यासः –

"काव्यालापाश्च ये केचित् गीतकान्यखिलानि च ।
शब्दमूर्तिधरस्यैते विष्णोरंशाः महात्मनः" ॥ इति ।

प्रतिदिनं ये च पदार्थाः अस्माभिरवलोक्यन्ते, याश्च सुखदुःखघटनाः अनुभूयन्ते, यच्च जीवनं क्रियते, सर्वञ्च तत् कियन्नूतनं, सरसं, सचमत्कारं मनोहरञ्च भवति कवेरनितरसाधारण्या कल्पनया !! तादृशीं दैवीं कविताशक्तिं प्राप्तवन्तः संस्कृतकवयः यद्यप्यासन् भारते सहस्रशः, तथापि तेष्वतिपरिमितानामेव ग्रन्थाः समुपलब्धाः । तेषु च विरलविरला एव कवयः सुप्रसिद्धिं गताः भागधेयवशात् ॥ आः - कष्टं ! कति वा भाग्यहीनाः कवयः निराश्रयाः निजकवितामतल्लिकाः प्राकाश्यं नेतुमशक्नुवन्तः बभूवुः !!

**कविपरिचयः**

तञ्जापुरीमधिष्ठाय शासत्सु महराष्ट्रीयराजसु १६७६ प्रभृति १६८३ पर्यन्तसमये महीपालो बभूव वेङ्कोजी अथवा एकोजीनामा ॥ तस्य चासीत् सचिवतल्लजः बावाजीयज्वतनयः गङ्गाधराध्वरीनामा ॥ तस्य त्रयः पुत्राः

अभूवन् नृसिह्माध्वरी, त्र्यम्बकरायमखी, भगवन्तरायमखी इति ॥ नृसिह्माध्वरी स्वपितुरनन्तरं एकोजीभूपालस्य अमात्यपदमलञ्चकार ॥ ततः १६८४ प्रभृति १७११ पर्यन्ते समये शाहजीमहाराजेन त्र्यम्बकरायमखी अमात्य-पदवीमारोपितोऽभूत् यः किल श्रीमद्वाल्मीकिरामायणस्य धर्माकूतनाम्नीं व्याख्यां विरच्य प्रसिद्धिं प्राप ॥ "तं वन्दे नररूपमन्तकरिपुं सर्वात्मनाऽहं भजे" इति द्रविड-प्रदेशे भजनसंप्रदायानुसारिभिः भागवतैः ध्यानगीतेन यः संकीर्त्यते, सः प्रातःस्मरणीयमहोदयः श्रीधरअय्यावाळ् काव्यमेकं शाहजीमहाराजमधिकृत्य चकारेत्यहो तन्नृपति-प्रकाण्डस्य कीर्तेः परा काष्ठा ॥

त्र्यम्बकरायमखी स्वपूर्वजस्य नृसिह्मरायमखिनः कुमारं आनन्दरायमखिनं सचिवं कृत्वा विरतिमलभत ॥ तस्यावरज एव भगवन्तरायमखी, यः किल मुकुन्द-विलासाख्यं पद्यकाव्यं, उत्तरकाण्डचम्पूः, राघवाभ्युदयं नाम नाटकमिति त्रीणि ग्रन्थरत्नानि प्रादात् ॥ राघवा-भ्युदयनाटकं सशिरःकम्पं जानकीपरिणयादिनानाग्रन्थनिर्मात्रा रामभद्रदीक्षितेन्द्रेण संश्लाघितञ्चेत् किन्नु वक्तव्यं भवति

तन्नाटकश्रैष्ठ्यं प्रति !! इदञ्चापूर्वं नाटकं पण्डिततल्लजैः वेदान्तशिरोमणिभिः ब्रह्मश्रीयुतपद्मनाभशर्मा-महोदयैः दुरूह प्राकृतवचनानां संस्कृतमयीं छायां व्युत्पाद्य प्रकाशितं सरस्वतीमहाल् ग्रन्थालयद्वारा दशवर्षेभ्यः प्राक् ॥ तथैव उत्तरकाण्डचम्पूः ग्रन्थालय "जेरनल्"द्वारा प्रकाशिता असीत् ॥ एवं सति, ग्रन्थेषु त्रिष्ववशिष्टो भवति मुकुन्द-विलासभिधो ग्रन्थः, यं किल प्रकाशयितुं शुभावसरं मे दत्तवन्तः तञ्जापुरी सरस्वतीमहाल्ग्रन्थालयनिर्वाहकोत्तमाः ॥

**कृतज्ञता**

तेभ्यः निर्वाहकाधिकारिभ्यः, तञ्जावूर्-मण्डलाधि-कारिभ्यः **श्री वी. के. जयकोडी,** ऐ.ए.एस्., महाशयेभ्यः, सरस्वती महालय निर्वहणाधिकारमावहद्भ्यः **श्री के. शङ्कर-नारायणन्** महोदयेभ्यः, सरस्वतीमहालय प्रकाशनविभागा-ध्यक्षाय **श्री अ. पञ्चनादन्,** एम्.ए., एम्.एल्.ऐ.एस्., महाशयाय, तथैव, "कापी" करणात्प्रभृति मुद्रणपर्यन्तं कृपयाऽतिसाहय्यं कृतवद्भ्यः, शिरोमणिभ्यः ब्रह्मश्रीयुत तेदियूर् एस्. कृष्णमूर्तिशास्त्रिभ्यश्च सादरं सविनयञ्च कार्तज्ञ्यं निवेदयामः ॥

काव्यपरिचयः

कविरयं भगवन्तरायः श्रीमद्भागवतीयश्रीकृष्ण कथामेव विषयमादाय दशभिः सर्गैः मुकुन्दविलासनामकं काव्यमरचयत् ।। तत्र देवकीवसुदेवयोः नगरप्रवेशकथा एव प्रथमतया प्रस्तूयते ।। ततः भगवतः श्रीकृष्णस्य अवतारः, शैशवलीलाः, बृन्दावनवर्णनं, गोसंरक्षणं बाल-क्रीडाः, शरदृतुवर्णनमति द्वितीयसर्गकथा ।। तृतीये सर्गे वसन्तग्रीष्मऋत्वोः वर्णनं, चतुर्थे सूर्यास्तमयचन्द्रोदयवर्णनं पञ्चमे सूर्योदयवर्णनं अक्रूरागमनं विरहव्यथोद्दीपकचन्द्रमन्मथ-मलयानिलादिनिन्दनपूर्वकं गोपीकृतविरहालापाश्च वर्ण्यन्ते ।। षष्ठे सर्गे हेमन्तर्तुवर्णनं, मथुरानगरगमनं, कुवलयापीड-चाणूरमुष्टिकादीनां वधः, कंसवधः देवकृता स्तु/तश्च गीयन्ते ।। ततः श्रीकृष्णाज्ञया भगवता वायुना, देवेन्द्रसभाऽऽनयनं देवसभा-वर्णनं, भगवत्कृतगुरुकुलवासः, मृतगुरुपुत्रस्यानयनं - इत्येतावता समाप्तिं याति सप्तमः सर्गः ।। कृष्णं प्रति योद्धुं कंस-वधकुपितजरासन्धेन कृता मन्त्रालोचना, अमात्यसुमति-कृतसदुपदेशः तन्निराकृत्य जरासन्धेन युद्धाचरणाय निर्याण-

मिति भवति कथाऽष्टमसर्गीया ।। श्रीकृष्णजरासन्धयोः भयङ्करं युद्धं, जरासन्धस्य पराजयः, उग्रसेनराज्यप्राप्तिः, कालयवनवधः बलरामस्य गोकुलगमनं, तत्र स्वहलेनाकृष्टायां यमुनायां तत्कृता जलक्रीडा च वर्ण्यते नवमे सर्गे ।। अन्तिमः दशमः सर्गस्तु रुक्मिणीविवाहः, अष्टमहिषीपरिणयः नरकासुरशिशुपालदन्तवक्त्रादीनां वधः भगवतः स्वस्थान-प्रस्थानमिति वृत्तान्तैः ग्रन्थोऽयं समाप्तिं नीयते कविराजेन भगवन्तरायेण ।।

।। शुभम् ।।

कवितल्लजः शिरोमणिः

**ना. वेङ्कटरमणः**



॥ श्रीः ॥

श्रीभगवन्तसूरिविरचितः

# ॥ मुकुन्दविलासः ॥

श्रीगणेशाय नमः ॥ श्रीरामाय नमः ॥

## ॥ प्रथमः सर्गः ॥

शिवं शिवाश्लिष्टतनुं तनूज-
विराजितोत्सङ्गमुदूढगङ्गम् ।
स्फुरत्कलाधीशकलाकलापं
वन्दे समारूढवृषं वृषाङ्कम् ॥ १

क्व वासुदेवाश्रयणी कथाऽसौ
जनः क्व च स्तोकमनीषयैषः ।
सत्यं तथाऽपि प्रतिपाद्यवस्तु-
माहात्म्यमेकं मुखरीकरोति ॥ २

मु

कंसः स्वसारं वसुदेवनाम्ने
यदूद्वहाय प्रतिपाद्य ताभ्याम् ।
अटन् प्रतोलीं गगनान्तरोत्थां
छन्दोमयीं वाचमुवाच कर्णात्(?) ।।[1] ३

यां त्वं वहन्नद्य रथेन मूढ !
प्रयासि कंस प्रतिपन्नहर्षः ।
तस्याः कुमारो भविताऽष्टमो यः
स सर्वथा त्वां निहनिष्यतीति ।। ४

सभर्तृकां हन्त ! ततः स्वसारं
निहन्तुकामः स तदाऽऽत्मगर्भान् ।
जहि क्रमेणे''ति तदीरितेन
न्यवेशयत्तां मुदितस्स्वगेहे ।। ५

ततः कदाचिद्दनुजैरियं भू-
राक्रम्य कंसादिभिरर्द्यमाना ।
निवेदयन्ती निजमार्तिवृत्तं
विधातृमुख्यान् विबुधानवाप ।। ६

1 शुश्राव छन्दोमयभारतीं तामटन् प्रतोलीं गगनान्तरोत्थाम् ।

प्राप्तां पुरस्कृत्य धरां सुरारि-
क्लान्तां विरिञ्चिप्रमुखास्सुधाशाः ।
दुग्धाब्धिमध्येशयमम्बुजाक्षं
शरण्यमीयुश्शरणं त्रिलोक्याः ॥ ७

बृन्दारकाणां नमताममन्दं-
स्तुतिध्वनिव्याप्तदिगन्तराळम् ।
श्रुत्वा दरोन्मीलितलोचनाब्ज-
मपाङ्गपातैर्निरवर्णयत्तान् ॥ ८

विभाव्य विष्णुर्विबुधार्तिहेतुं
दरस्मितां काञ्चिदुवाच वाचम् ।
छलेन केनाप्यवतीर्य भूमा-
वुत्सादयिष्याम्यसुरानशेषान् ॥ ९

ततः सरोजाक्षवचस्सुधाभि-
रार्द्रीकृतस्वान्ततया प्रसन्नाः ।
आश्वास्य देवीं धरणीममर्त्या-
यथाऽऽस्पदं पद्मभुवाऽधिजग्मुः ॥ १०

स्वसुः क्रमेणैव निषूदितेषु
कंसेन गर्भेषु हरिर्निजांशम् ।

तं रोहिणीं सप्तममात्ममायया

स्रावच्छलात् सङ्क्रमयाञ्चकार ॥ ११

अथाऽपरांशेन पुनर्जगाम

स देवकीगर्भमगाधभूमा ।

साऽपि क्रमादप्रतिमप्रहर्षा

गर्भस्य चिह्नानि शुभानि दध्रे ॥ १२

कस्तूरिकाबिन्दुलसल्ललाटं

तस्या मुखं केतकगर्भपाण्डु ।

मधुव्रताध्यासितमध्यभागं

विडम्बयामास सितारविन्दम् ॥ १३

पीनोन्नतौ पतिरुचावमुष्याः

पयोधरौ मेचकचूचुकान्तौ ।

उत्तुङ्गश्रृङ्गाश्रितवारिवाहौ

सुवर्णशैलाविव राजतः स्म ॥ १४

वलित्रयस्यापगमे स्फुरन्ती

रोमावली मौक्तिकदाममध्ये ।

कलिन्दकन्येव रराज गाङ्ग-

स्रोतोद्वयान्तश्चलिता नताङ्ग्याः ॥ १५

मध्यो मृगाक्ष्याः परमाणुरूप-

स्त्रिविक्रमस्यास्पदतामुपेत्य ।

शंसन्निवामुष्य दशां क्रमेण

वर्धिष्णुभावं जगृहे तदानीम् ॥ १६

भयेन कंसादभिवाञ्छितार्थान्

बाला तदा याचितुमक्षमैव ।

कदा नु पश्यामि धरामकंसा-

मित्येव चित्तेऽभृत दोहृदं सा ॥ १७

दिनेषु तस्याः क्रमशः प्रयाते-

ष्वन्तः प्रहृष्ट [विष्ट] सरसीरुहाक्षम् ।

ततः समाराधयितुं प्रहर्षात्

प्रावृट् प्रपेदे निजसौभगेन ॥ १८

क्वचिच्छिलीन्ध्रैः कुटजैः कुहापि

नीपैः क्वचित् कुत्रचिदर्जुनैश्च ।

संपर्कमापद्य समुज्जजृम्भे

सौरभ्यसान्द्रः शिशिरः समीरः ॥ १९

क्वचिन्नदन्तः क्वचिदुन्नदन्तः

क्वचिच्चरन्तः क्वचिदापतन्तः ।

क्वचिच्छिखाघूर्णनमाचरन्तो
मत्ता इवाऽऽसन्मुदिता मयूराः ॥ २०

स्मेरा वराङ्गीरुपगूहमाना
लीलाशिखिप्रेङ्खितमीक्षमाणाः ।
कथा विचित्रा अपि भाषमाणा
दिनानि केचित् कृतिनोऽपनिन्युः ॥ २१

अदर्शनं व्योमनि पुष्पवन्तौ
घनैस्स्वबन्धू गमिताविवतीव ।
दुःखाकुलान्युत्पलपङ्कजानि
स्वयं च मग्नानि जले बभूवुः ॥ २२

दानाम्बुधारार्द्रितमेदिनीका-
स्तारं नदन्तः करिणो विचेरुः ।
सौभाग्यमालोकयितुं धरित्र्याः
व्योम्नोऽवतीर्णा इव वारिवाहाः ॥ २३

मुहुर्मुहुर्वारि पिबन्त एव
न चातका नाभिलषन्ति भूयः ।
लोके हि वित्तं प्रतिपद्यमानाः
पुनः पुनश्चाभिलषन्ति लब्धुम् ॥ २४

प्रसारितोत्तुङ्गतरङ्गहस्ता
मुदा रसाढ्यं मुखमर्पयन्त्यः ।
समालिलिङ्गुस्सरितः समुद्रं
प्रियं चिरप्राप्तमिव प्रगल्भाः ॥ २५

नटयां नटन्त्यां तटिति द्युरङ्गे
दध्रे मृदङ्गध्वनिरम्बुवाहैः ।
जगे कलं केकिभिरूर्ध्वकण्ठै-
र्विदूषकत्वं समतानि भेकैः ॥ २६

आदाय सिन्धोस्सलिलानि सर्वे-
मुर्वीतलं सम्परिपूरयन्तः ।
इत्थं जनेभ्यः प्रलयस्वरूपं
निदर्शयामासुरिवाम्बुवाहाः ॥ २७

सखीजनस्यानुनयैर्वधूनां
प्रियप्रणामैरपि यो न जह्ने ।
पयोधरोदीरितगर्जितैक-
मन्त्रस्तमेवाशु नुनोद मानम् ॥ २८

जम्बूद्रुमाः पत्रनिलीनपुच्छैः
कीरैः फलाशैः पिहिताः समन्तात् ।

शाखाश्शलाटुस्थगिता दधानान्
विडम्बयन्ति स्म तदाऽऽम्रवृक्षान् ॥ २९

विश्वस्य जेतुर्विषमायुधस्य
वियोगिहृन्मर्मविदारदक्षा ।
सकण्टकाराजत केतकालिः
कठोरधारा क्रकचावलीव ॥ ३०

महीतले मेघजलैर्विमृष्टे
रेजुस्समन्तात् भृशमिन्द्रगोपाः ।
वर्षर्तुलक्ष्म्या इव सञ्चरन्त्याः
[1]पादाम्बुजप्रस्रुतयावकाङ्काः ॥ ३१

परस्परं विद्युदसिप्रहारै-
र्ध्नतां घनानां गगनाहवोर्व्याम् ।
अङ्गस्रुतासृक्कणिकानिकाशाः
भृशं विरेजुर्भुवि शक्रकोपाः ॥ ३२

न शक्रकोपैरवनी विकीर्णा
किन्त्वम्बुदालोकमदोद्धतेन ।

1 (स्यन्दितयावकाङ्काः)

शिखण्डिषण्डेन विखण्डिताना-
ममण्डि सेयं फणिनां मणीभिः ।। ३३

सुराङ्गनानां सुरतार्भटीषु
प्रभ्रष्टमुत्तुङ्गपयोधराग्रात् ।
माणिक्यमालामणिबृन्दमिन्द्र-
कोपापदेशादवनौ बभासे ।। ३४

पत्युर्नदीनां सलिलेन सार्धं
पीतस्य मेघैर्बडवामुखाग्नेः ।
वान्ता स्फुलिङ्गा इव दीप्तिमन्तो
भृशं विरेजुर्भुवि शक्रकोपाः ।। ३५

प्राक्ताडितानां मरुता घनानां
रदा निपेतुः करका[1]च्छलेन ।
किमन्यथा "नीरद" [2]इत्यमीषां
भवेत् प्रतीतं भुवनेऽभिधानम् ।। ३६

---

1 वर्षतौं करकपतनं कथं सङ्गच्छते इत्यत्र कविरेव प्रमाणम् ।

2 अस्मिन्पक्षे निर्गता रदाः दन्ताःयस्येति विग्रहः ।
नीरदाने प्रसिद्धस्य मेघस्य नीरदत्वमन्यथोत्प्रेक्ष्यते।।

स्वैरं पयोधेर्जलमाददाना-

स्तत्रस्थमापीय निशाधिनाथम् ।

वर्षोपलव्याजतयाम्बुवाहाः

तद्बिम्बखण्डान् ववमुस्समन्तात् ॥ ३७

आकाशभूमौ जलदद्रुमौघा

निष्यन्दिधारामकरन्दभाजः ।

वर्षर्तुलक्ष्मीं करकाप्रसूनै-

राराधयामासुरिवादरेण ॥ ३८

मुहुर्मुहुस्सञ्चरतां समन्ता-

दम्भोवहानामभिघट्टनेन ।

नूनं विशीर्णा नभसो निपेतु-

स्तारा धरण्यां करकाच्छलेन ॥ ३९

महेन्द्रकोपोज्ज्वलशाद्वलत्वा-

दास्तीर्णराजन्मणिकम्बला भूः ।

रराज कामस्य सभेव वात-

विधूतकादम्बरजोवितानाः ॥ ४०

मत्तापमाजह्रुरिति प्रहर्षा-

दुर्व्या तदानीमुपदाच्छलेन ।

पयोधरेभ्यः प्रहिता रराज
श्वेताब्जमालेव बकोटपङ्क्तिः ॥ ४१

जगद्विजेतुं चलिते रतीशे
केकीन्द्रकण्ठोऽभृत काहलित्वम् ।
सुरेन्द्रचापो नवतोरणत्वं
गर्जंस्तटित्वानपि दुन्दुभित्वम् ॥ ४२

आरुह्य श्रृङ्गाण्यवनीधराणा-
मुत्कन्धराः प्राग्वदना मयूराः ।
एहि त्वमेहि त्वमिति प्रशस्त-
केका नभस्वन्तमिवाह्वयन्तः ॥ ४३

प्राज्यं पयोधेर्जलमुद्वहन्त-
स्तद्भारखिन्ना इव वारिवाहाः ।
विश्रम्य विश्रम्य धराधराग्रे
दिवं क्रमादारुरुहुर्नदन्तः ॥ ४४

पुष्पेषु पाथःपरिपूरितेषु
लभामहे नैव वयं मरन्दम् ।
इत्थं समालोच्य मधुव्रतास्ता-
न्याच्छादयामासुरिवात्मपक्षैः ॥ ४५

वर्षर्तुलक्ष्मीर्वसुधां प्रपन्नं
प्रसूनबाणं प्रसमीक्ष्य हृष्टा ।
आरात्रिकामङ्गलमादरेण
समाचचारेव शिलीन्ध्रदीपैः ॥ ४६

ग्रीष्मेण तप्ता नितरामवाप्ता
निष्पत्रतां ये दववह्निदूनाः ।
शोभामवापुस्तरवस्त एते
कृतानुकम्पा इव वारिवाहैः ॥ ४७

नवाथ मासानतिवाह्य गर्भे
घनाघनोद्भासिनि कृष्णपक्षे ।
अभ्यष्टमि श्रावणमासि रात्रा-
वाविर्बभूव स्वयमम्बुजाक्षः ॥ ४८

त्राणाय विश्वस्य यदाऽभिजज्ञे
नारायणोऽसौ वसुदेवपत्न्याम् ।
तदैव कन्यां सुषुवे यशोदा
या नन्दगोपस्य मनोऽनुकूला ॥ ४९

माया मुरारेर्महती तदानी-
मरिष्टगेहाद्वसुदेवपत्न्याः ।

प्रापय्य नन्दस्य गृहं कुमारं
तामानयत्तूर्णमदस्समीपम् ॥ ५०

नन्दस्य कश्चिन्ननु नन्दनोऽभू-
दिति प्रघोषोऽजनि घोषमध्ये ।
कन्याऽपि धन्याऽऽनकदुन्दुभेरि-
त्येषा प्रथा कंसपुरे जजृम्भे ॥ ५१

गर्भाष्टमत्वप्रतिपत्तिमात्रात्
पुत्रीति जानन्तमपि प्रहर्तुम् ।
समुद्यतं सत्वरमत्र कंसं
सा खं समुत्प्लुत्य तदैतदूचे ॥ ५२

अहं न हन्त्री तव जाल्म कंस
हन्ताऽन्य एवास्ति परत्र कश्चित् ।
यद्यस्ति सामर्थ्यममुं विमृश्य
समीहितं तत्तरसा विधेहि ॥ ५३

इत्थं तदुक्तिचकितः सुतरां स कंस-
स्तान्पूतनाशकटधेनुककेशिमुख्यान् ।
सन्दिश्य बालकवधाय सजानिमेनं
बन्धान्मुमोच वसुदेवमपोढशङ्कः ॥ ५४

गङ्गाधराध्वरिसुतो नरसिह्मसूरे-
यँस्त्र्यम्बकाध्वरिमणेश्च सुधीः कनीयान् ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ५५

॥ इति श्रीमुकुन्दविलासे प्रथमस्सर्गः ॥



## ॥ द्वितीयः सर्गः ॥

कंसतस्तदनु लब्धविमोकः
प्राप्य गोपरमणं वसुदेवः ।
गच्छ गोकुलमितस्त्वरयेति
व्याजहार स वितीर्णकरं तम् ॥ १

मानयन्व्रजपतिर्वसुदेवं
व्याहृतां गिरमुदञ्चितहर्षः ।
गोपसङ्घविहितस्तुतिघोषं
घोषमेव शकटीभिरवाप ॥ २

अर्धरात्रसमये बत काचित्

पूतनेति सुविभीषणनाम्नी ।

आययौ शिशुवधैकविहारा

पापमाचरितुमत्र कुमारे ॥ ३

या हता दशमुखस्य वधात्प्राक्

सैव सुन्दवनितेति विभाव्य ।

पूतनां मुररिपुस्सहसैनां

वीरपाणमिव पानमकार्षीत् ॥ ४

यत्तदा शकटमक्षिपदुच्चै-

र्लीलया मुररिपुः प्रपदेन ।

तज्जना "विदलितः शकटाख्यो

निर्जरारि"रिति हर्षमविन्दन् ॥ ५

संज्ञया यमकरोद्व्रजराजो

राममेकमपरं खलु कृष्णम् ।

तौ विरेजतुरतीव दधाना-

वद्भुतानि चरितानि तदानीम् ॥ ६

डोलिकामनुभवन्व्रजकन्या-

लोलिकामुखरितां मुरवैरी ।

वीचिलोल[1]कलशाम्बुधिशय्या-
मस्मरत्सुरवधूकृतगीताम् ॥ ७

आननाब्जमकरन्दरसेन
स्वर्णदीं सुरभयन्निव कृष्णः ।
पर्यचूषदनिशं निजपादा-
ङ्गुष्ठमेकमवलम्ब्य करेण ॥ ८

दृप्तदैत्यपरिपीडितसत्वा
मङ्क्ष्यतीयमवनीति स मत्वा ।
जानुचङ्क्रमणकैतवतस्ता-
मुद्धरन्निवशनैर्विचचार ॥ ९

पूर्वमेकचरणाक्रमणेन
प्राप या वसुमती लघिमानम् ।
मन्दचङ्क्रममिषेण मिमान-
स्तां पदैः स महतीं विततान ॥ १०

दर्शयन् किमपि वस्तु करेण
द्राक् समर्पय तदम्ब ममेति ।

---

1 कलशाम्बुधिः - क्षीरसागरः ।

अस्फुटाक्षरमवोचदसौ य-

त्तेन निर्वृतिमगाद्व्रजराजः ॥ ११

अत्यमर्षचटुलभ्रुकुटीकः

स्वं समीक्ष्य मणिभित्तिषु बिम्बम् ।

कोऽपि मामिह विडम्बयतीति

व्याहरन्नयमहासयदम्बाम् ॥ १२

ईहितं मम करोति न धात्री

ताडचतामियमिति प्ररुरोद ।

ताडितामिव समीक्ष्य ततस्तां-

मोचयन्करुणया स जहास ॥ १३

स्वं गृहीतनवनीतममर्षा-

त्सङ्गृहीतुमबलामनुयान्तीम् ।

पीवरस्तनभरस्खलिताङ्घ्रिं

रोषरूक्षमभिवीक्ष्य जहास ॥ १४

अम्ब ! सूनुममुज्झितनीतिं

शिक्षयेति भवतीं [जननीं] निगदन्तीः ।

मामकृत्यमनुशासति चेमा-

स्तद्वचो न गणयेत्यवदत्सः ॥ १५

दारकैः स विहरन् सवयोभिः
केनचित् पिहितलोचनपद्मः ।
तानबुद्धमपि वस्तु विबुद्धं
व्याहरन्ननयदद्भुतभावम् ॥ १६

स्वं गृहीतुमनुधावति बाला
काचिदित्यधिगतस्तदगारम् ।
आशु तद्रमणरूपमवाप्त-
स्तां चटूक्तिभिरतोषयदेषः ॥ १७

युक्त एष नहि दुर्विनयस्ते
काश्चिदित्थमबलां निगदन्तीम् ।
भाषितं समनुभाष्य तदीयं
स व्यडम्बयदपेतविशङ्कः ॥ १८

स्वाङ्कसीम्नि निहितः स कयाचिद्
वीक्ष्य बिल्वसदृशौ तदुरोजौ ।
अर्पयैकं अयि ! कन्दुकयोरि-
त्यातनिष्ट तरुणीं स सलज्जाम् ॥ १९

तीरसीम्नि वसनानि मृगाक्षीः
सन्निवेश्य विशतीः सरिदम्भः ।

सोऽभिवीक्ष्य निभृताङ्घ्रिरुपेत-

स्तान्यचूचुरदसावथ लिल्ये ॥ २०

गोपिकासु विपणीं चलितासु

प्राप्य तत्र सविधं सवयोभिः ।

निर्भयस्तदनुवर्त्मनि रुन्धन्

याचति स्म दधिदुग्धविभागम् ॥ २१

जातुचित्कुपितया जनयित्र्या

हन्त ! निर्दयमुलूखलबद्धः ।

तिर्यगेतदकरोत्परिकर्षन्

लीलयैव यमळार्जुनभङ्गम् ॥ २२

पूतनाशकटभूरुहभङ्गैः

शङ्कितस्तनयवीर्यमजानन् ।

वस्तुमक्षममिहेति स बृन्दा-

काननं सह ययौ[1]तनयाभ्याम् ॥ २३

---

1 बलरामकृष्णयोर्नन्दगोपतनयत्वं अवास्तविकमेव । तयोर्वसुदेव-पुत्रत्वं जानतोऽपि नन्दगोपस्य संवर्ध्यमानयोः तयोरुपरि पुत्र-निर्विशेषा प्रीतिरासीत् । कंसपीडाशङ्कया निलीय संवर्ध्यमानयोः नन्दगोपपुत्रत्वकथनं प्रेमभावातिशयप्रयुक्ततया काल्पनिकमपि युक्तम् ।

तावुभावपि लताद्रुमसान्द्रं
कानन तदभिवीक्ष्य विचित्रम् ।
सप्रमोदमभितो विचरन्ता-
वूचतुः खलु परस्परमित्थम् ॥ २४

किन्विदं निजफलस्थितमम्भः
स्वादु तत्किममृतं विधुबिम्बे ।
नारिकेलधरणीरुहबृन्दं
ज्ञातुमित्थमिव वृद्धिमुपैति ॥ २५

गोपिकाकुचजितानि फलानी-
त्युद्गताः खमधिरोढुमिवात्याः[1] ।
तत्र चाऽमरवधूकुचभीत्या
तानि तालतरवो जहतीव ॥ २६

पल्लवैः परभृतानपि पुष्पैः
षट्पदानपि फलैः पथिकांश्च ।
प्रीणयन्त इह तत्तदभीष्टैः
कल्पका इव विभान्ति रसालाः ॥ २७

---

1 अत्य - Steed, Stud horse

पुष्पितार्जुनमहीरुहबृन्दा
भाति विष्वगधिकं विपिनश्रीः ।
वाससापहृतकाञ्चनभासा
संवृताङ्गलतिका तरुणीव ॥ २८

वातकम्पितमनोहरशाखा-
सञ्चलत्पृथुफला लिकुचालिः ।
दृश्यमानविवलत्कुचकुम्भा
भाति वारवनितेव नटन्ती ॥ २९

आनताः फलभरैरिह जम्बू-
पादपा दधति कामपि शोभाम् ।
सज्जना इव समृद्धिभिरिद्धाः
सन्ततं विनमिता विनयेन ॥ ३०

देववल्लभतया प्रथिताः स्मो
वल्लभं तदिदमेषु विधेयम् ।
इत्यमी निजपरीमळमूर्ध्वं
प्रेषयन्ति पुरुषद्रुमसङ्घाः ॥ ३१

दुग्धमुग्धरुचिभिः सुमनोभिः
सान्द्रितं कुटजगुल्मकदम्बम् ।

तारकाभिरभितो विमलाभि-
श्शोभितं नभ इवाऽत्र विभाति ॥ ३२

सान्द्रपुष्पपिहिताखिलपत्राः
चम्पकक्षितिरुहा विलसन्ति ।
आगता इव समीक्षितुमेत-
त्काननं कनकभूधरकूटाः ॥ ३३

सान्द्रपुष्पपिहिता नतशाखाः
सीधुसौरभझरीभरिताशाः ।
शीतलस्फुरदनातपगर्भाः
केसरक्षितिरुहाः प्रतिभान्ति ॥ ३४

भान्ति पीवरफलव्रजदम्भा-
दम्बुदाः पनसपादपसंस्थाः ।
किन्निजाम्बुपरिपुष्टवनश्री-
वीक्षणप्रमदकण्टकिताङ्गाः ॥ ३५

अत्युदग्रविटपग्रथितत्वा-
द्गोपिका न हि फलानि लभेरन् ।
इत्यमूस्सकरुणा इव धात्र्यो
विक्षिपन्ति भुवि तानि समन्तात् ॥ ३६

सान्द्रसङ्गतफलोज्वलशाखाः
संविभान्ति परितो वटवृक्षाः ।
कीरचञ्चुरुचिविद्रुमवल्ली-
राजिराजितशिखा इव शैलाः ॥ ३७

भान्ति पूगतरवः परिरब्धाः
प्रौढनागलतिकातरुणीभिः ।
रागमुत्कटमिव स्फुटयन्तः
पक्वबिम्बरुचिभिः फलमालैः ॥ ३८

अत्युदग्रविटपाग्रविराज-
द्राजमण्डलतयाप्यहिसङ्गात् ।
राजचूडमहिभूषणमीशं
किं विडम्बयति चन्दनसङ्घः ॥ ३९

तीक्ष्णपर्णमुकुलाग्रविशीर्य-
च्चन्द्रबिम्बगळितामृतपूरैः ।
सिक्तमेव कदलीविपिनं स्या-
दन्यथा कथमयं फलपाकः ॥ ४०

पल्लवैस्समवकुण्ठितवक्त्रा
वीरुधः कुसुमशोभितगात्राः ।

मत्तभृङ्गगणगीतचरित्रा-
स्तत्र तत्र खलु भान्ति विचित्राः ॥ ४१

तौ श्रिया विजितनन्दनमेत-
त्काननं हसितचैत्ररथं च ।
विस्मतौ समवलोक्य तदानीं
रेजतुर्गुणगणैक[1]निकाय्यौ ॥ ४२

हायनैर्दशभिरत्यभिरामे
रामकृष्णवपुषी स समीक्ष्य ।
नन्द एष भुवनावनदक्षौ
रक्षकावतनुत स्वगवीनाम् ॥ ४३

बर्हिबर्हकृतमुग्धवतंसौ
वन्यपुष्पकलितोज्ज्वलहारौ ।
वंशयष्टिसमधिष्ठितहस्तौ
गोकदम्बकमुभाववतः स्म ॥ ४४

अङ्गुलीयरुचिरञ्जितदण्डं
मोहितत्रिभुवनं वनमाली ।

---

1 निकाय्य - Dwelling place

वेणुमाहृतकुरङ्गसमूहं

हर्षनिर्भरमवादयदुच्चैः ॥ ४५

प्रस्तु[स्नु]तानतपयोधरभाराः

प्रस्तुतानुपदभाङ्क्तिघोषाः ।

चेरुरुद्धतमनुद्रुतवत्सा

वेणुनादविवशाः खलु गावः ॥ ४६

वेणुवादनममुष्य विदित्वा

विस्मिताः त्रिदशविभ्रमवत्यः ।

चित्रिता इव तदेकमनस्का

र्निर्निमेषनयनाः समभूवन् ॥ ४७

गोकदम्बकमवन्तमधःस्वं

सेवितुं स शरदं प्रतिपन्नाम् ।

वीक्ष्य सौभगमशेषममुष्याः

पूर्वजाय विनिवेदयति स्म ॥ ४८

शीतरश्मिवदना कुमुदाक्षी

कोकपीवरकुचा शरदेषा ।

हंसहंसकयुताम्बुजपादा

पश्य! सञ्चरति मूर्तिमतीव ॥ ४९

साम्बुभिर्वसुमतीं परिपूर्यं
प्राप्य साम्प्रतममी तनिमानम् ।
याचकार्पितधना भुवि केचित्
सज्जना इव घनाः प्रतिभान्ति ॥ ५०

स्वच्छता मम हृतेति पयोभि-
स्तानि पङ्किलयितुं तटभेदैः ।
नीरदाश्शितरुचो गगनेन
प्रेषिता इव चरन्ति महोक्षाः ॥ ५१

पाण्डुतामथ कृशत्वमवाप्ते-
ष्वम्बुदेषु निजवृद्धिपरेषु ।
शालयः फलभरेण नतास्या
दुःखिता इव भृशं प्रतिभान्ति ॥ ५२

शालिगोपरमणीजनगानै-
र्मोहमेत्य हरिणा धुतघासाः ।
तद्विलोचनविलासविशेषा-
नीप्सवः किल तदेकमनस्काः ॥ ५३

विष्णुना सहितमुज्झितनिद्रे-
णात्मनाथमवलोक्य तटिन्यः ।

युक्तमन्यपुरुषेण कथं वा
हन्त याम इति यान्ति शनैस्तम् ॥ ५४

ये हिमांशुमनवेक्ष्य चकोराः
प्रावृषि क्लमगताः कृशदेहाः ।
सङ्गमेन त इमे शरदिन्दोः
सञ्चरन्ति मुदिता अपि मत्ताः ॥ ५५

बर्हभूषणमुदस्य निकुञ्जं
संश्रितैः शिखिभिरुज्झितकेकैः ।
नष्टनीरदकुलाभ्युदयार्थं
चर्यते तप इवोग्रममीभिः ॥ ५६

यां सिताम्बुजनितानि मुषित्वा
गोपनाय निशि कुड्मलितानि ।
विक्रयाय विकचानि दिवा तां
कौमुदीमिव परिस्फुटयन्ति ॥ ५७

सैकतस्य जघनस्य न युक्तं
दर्शनं जलनिधेर्युवतीनाम् ।
इत्यसौ शरदिदं नवकाश-
च्छद्मनैव पिदधाति दुकूलैः ॥ ५८

आवृता धवलवारिदबृन्दैः
साम्प्रतं क्षितिधरा विलसन्ति ।
चर्चिताभिनवचन्दनपङ्काः
सुभ्रुवामिव पयोधरकुम्भाः ॥ ५९

अच्छतामधिगतासु सहर्षं
पद्मिनीषु शरदो विचरन्त्याः ।
संविभान्ति चरणाम्बुजरेखा-
स्तत्र तत्र सरसीरुहरूपाः ॥ ६०

मुक्तशैवलकुलानि समन्ताद्
दृश्यमानशफरीचरितानि ।
सज्जनस्य मनसैव समत्वं
गृह्णते कमलिनीसलिलानि ॥ ६१

प्राक् प्रसादमधिकं प्रतिपन्नो
भारमक्षम इवास्य विसोढुम् ।
अम्बराम्बुहरिदम्बुरुहेभ्यः
संविभज्य समदत्त हिमांशुः ॥ ६२

सप्तपर्णतरुपुष्पसुगन्धं
जिघ्रता मदनमत्तगजेन ।

भिद्यते विरहिणीजनधैर्यं-
ग्रावकूटमतुलप्रमदेन ॥ ६३

इत्थमग्रजनुषं विविधाभि-
स्सूक्तिभिः प्रमदयन् मुरवैरी ।
गन्तुमस्तशिखरं खरभानौ
वाञ्छति द्रुतमगाद्व्रजवाटम् ॥ ६४

पूर्वजेन रहितः स कदाचित्
गोकदम्बकमवन् रविकन्याम् ।
काळियाहिगरलानलदग्ध-
क्ष्मारुहाश्चिततटामभिपेदे ॥ ६५

स प्रविश्य सरिदम्भसि वेगात्
प्राक्करेण परिगृह्य च पुच्छे ।
धृष्टपन्नगमसह्यमशेषै-
र्द्राक् पदाऽऽक्रमत मूर्ध्नि मुरारिः ॥ ६६

इत्थमात्मरमणं प्रपदेन
क्लान्तमेक्ष्य चकिताः फणिकन्याः ।
तं विना शरणमन्यमलब्ध्वा
श्रीरमेशमनुनेतुमवापुः ॥ ६७

स प्रणाममहिराजवधूभि-
यर्चितः स मुरजित् पतिभिक्षाम् ।
गच्छ वारिधिमितस्त्वरयेति
व्याहरन्नसुभिरेनममुञ्चत् ॥ ६८

या चिरेण तटिनी विषदग्धा
तां प्लुतामिव विधाय सुधाभिः ।
वारि भूतितरसा स विभिन्द-
न्नुच्चचाल रयरेचितवीचिः ॥ ६९

आश्लिष्टः श्रुतफणिमथनेन पश्चात्-
दभ्येत्य स्वनिलयतोऽग्रजेन शौरिः ।
आभीरैरपि परिपूजितस्तदानी-
मव्राजीद्व्रजमभियाति भास्करेऽस्तम् ॥ ७०

गङ्गाधराध्वरिसुतो नरसिंह्मसूरे-
र्यस्त्र्यम्बकाध्वरिमणेश्च सुधीः कनीयान् ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभेऽजनि मुकुन्दविलासनाम्नि ॥ ७१

॥ इति श्रीमुकुन्दविलासे द्वितीयस्सर्गः ॥



## ।। तृतीयः सर्गः ।।

गुप्तं धेनुकदानवेन सुचिरात् तौ रामकृष्णौ तदा
तालारण्यमवापतामथ फलैरापूरयेतां धराम् ।
प्राप्तं वीक्ष्य खराकृतिं तमचिरादादाय पश्चात्पदे
श्रामं श्राममपातयत् क्षितितले रामो विरामो
द्विषाम् ।। १

जहि त्वं मुरारिं प्रसह्येति कंस-
प्रदिष्टं पटिष्ठं च दैत्यव्रजेषु ।
वने वीक्ष्य गोपालदम्भाच्चरन्तं
जघानाऽविलम्बं प्रलम्बं मुकुन्दः ।। २

शृङ्गारं परिवर्धयन् द्विजगणं प्रह्लादयन्नादरा-
दामोदं सुमनःकुलस्य कलयन् कन्दर्पमुद्भावयन् ।
रामोल्लासमुपानयन्ननुवनं कान्तां श्रियं क्रीडयन्
मासो माधव एष माधव इव प्रादुर्बभूवाऽद्भुतः ।।

अधिरुह्य समीरचक्रयानं
धृतशृङ्गारपताकिकं जायाय ।
रतिनायकसारथिर्वसन्तो
धरणीनाथ इव क्षितिं प्रपेदे ।। ४

पथिकजनमनांसि क्षोभयन्विक्षिपन्द्रा-
गमलकमलरेणुं दिग्वधूनां मुखेषु ।
रतिपतिसमरान्तक्लान्तकान्ताकपोल-
क्लममलमपमार्जन् प्रादुरासीत्समीरः ॥ ५

खञ्जः किं मलयाद्रिश्रृङ्गपतनात् सौरभ्यसारं वहन्
पुष्पाणामथवा मधोरभिनवां लक्ष्मीं किमालोकयन् ।
किं क्रीडन् विपिने लताभिरभितः पुष्पाणि किं विक्षिप-
न्नभ्यस्यन्नबलागतिं किमुत वा मान्द्यं
बभाराऽनिलः ॥ ६

समुपेत्य [1]पटीरधराधरत-
स्सरसः [2]कमलो विहरन् कमलैः ।
पथिकान्मदनाकुलितान् कलय-
न्पवनः प्रववौ सुरभिः शिशिरः ॥ ७

शनकैः पटीरधरणीधरसानोः
पवने प्रवाति नवपुष्पसुगन्धौ ।

---

1 पटीरधराधरः - मलयगिरिः ।

2 कमलः desirous.

कलुषाणि तापसमनांस्यपि चासन्
बत चञ्चलानि किमुतान्यमनांसि ॥ ८

प्रवाळिता कोरकिता ततश्च
प्रसूनिता सन्निहिते वसन्ते ।
दिने दिने संववृधे वनश्री-
र्मुग्धाङ्गनाया इव यौवनश्रीः ॥ ९

मार्तण्डापतदंशुजालचपलासंपर्कसंशोभितैः
सान्द्रोत्तुङ्गमहीरुहाम्बुदगणैस्संपादितश्रीर्मधुः ।
आसिञ्चन्मकरन्दनीरनिकरासारैर्धरित्रीतलं
प्रावृट्काल इवाबभावनुकलं वामभ्रुवः प्रीणयन् ॥

परिणतरुचिकिंशुकैरुपेता
परमरुद्विपिनस्थली समस्ता ।
प्रचुरमनसिजाहवान्ततान्ता
प्रणयिनखव्रणमण्डितेव कान्ता ॥ ११

ध्यायन्ती नवकोरकैः सुमनसां बृन्दैर्हसन्ती मुहुः
पान्थान् कोमलपल्लवाग्निशिखया सन्त्रासयन्ती
भृशम् ।
गायन्ती परपुष्टषट्पदकुलध्वानैर्वनश्रीरसा-
वुन्मतता मधुसेवनादिव तदा मेने समस्तैर्जनैः ॥ १२

विपिनेषु विरेजुरत्यराळाः
कलिकाः किंशुकमेदिनीरुहाणाम् ।
अरुणाः करजा इव स्मरस्य
प्रसभं पान्थहृदां विदारणेन ॥ १३

पान्थानामकृतागसां समुदये यस्मादकाण्डे मधुः
प्राभूद्दण्डधरः श्रिया च नवया पुष्णन् मुहुः
पल्लवान् ।
सञ्चेरुर्मधुपा जगुः परभृतो हर्षात् पलाशा बभुः
प्राप्ते दुर्नयशालिनि प्रभुतया किं किं न
संभाव्यते ॥ १४

येषां प्रसूनान्यबलाकुचस्य
नखक्षतानीव विलोक्य भीतः ।
वियोगिवर्गो [1]विषमेषुवश्यो
मेने [2]पलाशानिव तान् पलाशान् ॥ १५

पवनावधूतनवपल्लवशाखः
सुतरां प्रमत्तपरपुष्टविरावैः ।

---

1 विषमेषुः - मन्मथः ।

2 पलाश - राक्षसः पलाशवृक्षश्च ।

कुसुमोद्गमार्थमिव दौर्हृदलिप्सु-
स्तरुणीमशोकतरुराह्वयति स्म ॥ १६

चम्पकस्य किमनादरतोऽयं
भृङ्ग एष मधु पक्वमवाप ।
नादरं गुणिनि यः कुरुते स
प्राप्नुयाद्दुरभिधामनिवार्याम् ॥ १७

वकुलं कुसुमाकुलमेक्ष्य वने
परिमुक्तरुषः प्रणयावनतान् ।
दयिता दयितानजयन्मुदिताः
सहसाः सहसा सह सामगिरा ॥ १८

अश्रान्तमञ्जुरवभृङ्गगणोपगीता
निष्पन्दमानमकरन्दमदाम्बुधाराः ।
अत्युन्नता विटपिनो विपिने घनाभा
मत्ता गजा इव वसन्तनृपस्य रेजुः ॥ १९

प्रचलति मलयाद्रेर्मन्दमन्दं समीरे
प्रथयति कुसुमानि क्ष्मारुहाणां समूहे ।
प्रणदति च पिकानां मण्डले हा ! तदानीं
प्रणयविरहिणीनामापदासीद्वधूनाम् ॥ २०

लताऽबलासान्द्रविकीर्णपुष्प-

लाजाक्षतैश्च द्विजगीतमन्त्रैः ।

मेने जनः पल्लवपावकाग्रे

वनस्थलीमाधवयोर्विवाहम् ॥ २१

सान्द्रस्फुरत्किसलयैः परिभूषिताग्रा

रेजुर्लताश्च तरवश्च विशेषहृद्याः ।

सङ्क्रीडिता इव कुसुम्भजलैर्युवानः

स्वैरं परस्परमिवाम्बुजलोचनाश्च ॥ २२

मलयावनीध्रद्रुतवातसमिद्धः

परितो विसारिमधुपावलि[1]धूम्यः ।

कुसुमार्चितेषु विटपायतनेषु

प्रतरां प्रवालदहनः प्रचकाशे ॥ २३

उच्चैरधीयान इवाऽऽरवेण

कामागमं षट्पदवर्णिवर्गः ।

प्रतिप्रसूनोज्ज्वलवृक्षवाटं

[2]मरन्दभिक्षामटति स्म नूनम् ॥ २४

---

1 धूम्या - Thick Smoke

2 मरन्दः - मकरन्द ।

सान्द्रप्रसूनकलितद्युतिभिर्लताभिः
संवेदिता विटपिनःसुतरां विरेजुः ।
अब्जेक्षणाभिरिव संभृतभूषणाभि-
रालिङ्गिताः प्रियतमाः प्रणयेन गाढम् ।। २५

पत्नीं प्राप्य वनश्रियं शुभकृते यष्टुं प्रवृत्ते मधौ
ब्रह्माणं कुसुमायुधं परभृतं होतारमुच्चैस्स्वनम् ।
उद्गातारमलिं विधाय च तदा सूनस्रुचा भूरुहा-
मध्वर्युः पवनो जुहाव मकरन्दाज्यं प्रवालानले ।।

परितो नवपल्लवान् परागं
परिकीर्णं जनता समीक्ष्य मेने ।
तुषजालमुषर्बुधे वितीर्णं
भृशमुद्दीपयितुं मनोभवेन ।। २७

रसार्दिताभिर्लतिकावधूभिः
स्कन्धे गृहीतास्तरवो युवानः ।
शाखाकरानुज्ज्वलपुष्पभूषा-
न्वितेनुरासां स्तबकस्तनेषु ।। २८

तरवः प्रसमीक्ष्य वीरुधः स्वा
नवपुष्पोद्गमलोभनीयरूपाः ।

विकसत्कुसुमच्छलात्प्रहर्षं
प्रथयन्ति स्म बहिर्निगूढमन्तः ॥ २९

स्वैरं प्रगृह्य निजचञ्चुपुटेन बाल-
चूतप्रवालशकलानि पिकाः सहर्षम् ।
वृक्षान्तरे स्थितवतीरपि कामिनीस्स्वाः
सोत्कण्ठमैक्षिषत दातुममूनि ताभ्यः ॥ ३०

जिघ्रन्तोऽप्यनुपमकेसराग्रसङ्गी-
न्युज्झित्वा नवकुसुमानि चञ्चरीकाः ।
सानन्दं तदधिकसौरभेषु भूमौ
कीर्णेषु द्रुतमपतन्पचेलिमेषु ॥ ३१

वायुना विहरता नवपुष्प-
प्राज्यसौरभझरीः परिगृह्य ।
झङ्कृतैरनुपतन्मधुपानां
चक्रिरे दश दिशः परिपूर्णाः ॥ ३२

मधुप्रफुल्लोज्ज्वलपुष्पजात-
सुगन्धसंमोहितचाटुभृङ्गाम् ।
परागलिप्ताऽखिलदिग्विभागां
व्यराजयच्चम्पकवृक्षवाटीम् ॥ ३३

आम्रपादपगणाः स्फुटपुष्पा-

स्ताम्रपल्लवधरा विरराजुः ।

लिप्तचन्दनरसा नववीटी-

रागरञ्जितमुखा इव कम्राः ॥ ३४

सम्पन्नं समधिकशाद्वलैः समन्ता-

दाकीर्णं धरणितलं नवप्रसूनैः ।

वैकल्यादधरितमौक्तिकैः स्फुरद्भि-

र्नक्षत्रैर्नभ इव मेदुरं रराज ॥ ३५

व्याकोचपुष्पविगलन्मकरन्दपान-

मत्तद्विरेफनिकुरुम्बरुताऽपदेशात् ।

हा ! हन्त ! पुष्पसमयेऽप्यनवाप्तपुष्पां

जातीलतामपहसन्ति लताः स्म सर्वाः । ३६

द्विरेफश्रेणीभिः कृतजपवटाः पल्लवमिषा-

द्वसानाः काषायं वसनमपि सन्नद्धमुकुलैः ।

कृतब्रह्मध्यानाः प्रमदनयनाश्रूणि जहतो

मरन्दप्रस्यन्दैर्यतिन इव रेजुर्विटपिनः ॥ ३७

पीतं परागैर्नवचम्पकानां

श्वेतं राजोभिः स्फुटमालतीनाम् ।

सहात्मना किंशुकरेणुरक्तं
चक्रे त्रिवर्णं गगनं समीरः ॥ ३८

ज्ञात्या विहीनास्वपि वल्लरीषु
स्वैरं चरन्तः सततं द्विरेफाः ।
आजानसिद्धं मधुपत्वमेव
प्रच्छन्नमन्तःस्फुटयाम्बभूवुः ॥ ३९

स्पर्शेन चन्दनमहीधरमारुतस्य
प्रोद्भिन्नकुड्मलमिषात्पुलकोज्ज्वलाङ्गीम् ।
दृष्ट्वाऽविमुक्त[1]लतिकां सहकारवल्ली
फुल्लप्रसूनरुचिकैतवतो जहास ॥ ४०

पुष्पौघनीरन्ध्रितचम्पकद्रु-
वृन्दच्छलात् प्राप्तजगज्जयेन ।
आसन्निखाता नवहैमजैत्र-
स्तम्भाः समन्तान्मकरध्वजेन ॥ ४१

पाटीराद्रिसमीरणं परिणुदन् साकं वसन्तर्तुना
तेजांसि प्रसवायुधस्य सरसां सारैः समाशोषयन् ।

---

1 Name of a plant.

संव्यानानि हरन् वधूकुचतटात्पर्णैः समं भूरुहां
ग्रीष्मः प्रादुरभूद्दिनं दिनमणेस्तापैस्समं द्राघयन् ॥

विवशःसुहृदो मधोर्वियोगा-
दपहायैष तदा पटीरगन्धम्' ।
फणिनिश्वसितैरिवानुषङ्गा-
त्प्रववौ गन्धवहः प्रकाममुष्णः ॥ ४३

या पश्यतो जलमिव प्रतिभाति दूरे
सैषा मरुस्थलगता मृगतृष्णिका न ।
किन्तु प्रचण्डकिरणैस्तरणेर्विदीर्णाद्-
भूमण्डलादुदगमन्फणिफूत्कृतानि ॥ ४४

मत्तषट्पदगणैरुपगीता
मञ्जुसौरभझरीभरिताशाः ।
मल्लिकाः कुसुमिता विरराजु-
र्माधवश्रियमिव प्रहसन्त्यः ॥ ४५

ग्रीष्मे नितान्तं प्रसमीक्ष्य मर्त्या
ग्लानं मनोजद्रुममादरेण ।

1 Garments, upper garments

तद्वृद्धिहेतोरिव शीतशीतै-
मनांसि सिञ्चन्ति रसैरजस्रम् ॥ ४६

क्षोणीसमालम्बिजटापरिष्कृता
दिगम्बराः प्रोज्झितपत्रवृत्तयः ।
वर्षोष्णशीतान्यवधीर्य पादपा
विरेजिरे हन्त तपोधना इव ॥ ४७

तटभूरुहबृन्दमात्मपुष्टं
परिभूतं शुचिना भृशं समीक्ष्य ।
स्वयमापुरिहानुकम्पयेव
प्रतिवारं बत दीनतां सरस्यः ॥ ४८

तप्तास्तटिन्यस्तपनांशुजालैः
कृशाः शनैरापुरपामधीशम् ।
क्लिष्टाश्चिरं कामशरैर्निकामं
कान्ताः कुलीना इव कान्तमिष्टम् ॥ ४९

व्यावल्गत्कुचकुम्भघट्टितभुजस्रस्तोत्तरीयैर्मुहु-
र्घर्मस्विन्नकपोलहृद्यवदनैः कान्ताजनैरीरितान् ।
ग्रीष्मे शीतलतालवृन्तपवनानौशीरगन्धान्विता-
न्धन्या हन्त सिषेविरे युवजनाः
पाटीरलिप्ताङ्गकाः ॥ ५०

छायाऽनुगच्छति सदा निजमित्रमेवे-
त्युन्मस्तकः प्रहृत एष जनप्रवादः ।
अन्यत्र सांप्रतमियं कथमित्यमर्षा-
च्छायांशुभिर्विटपिनामिव सञ्जहार ।। ५१

पानीयशालामधिगम्य पान्था-
स्तत्पालिकादत्तजलैर्न तृप्ताः ।
किञ्चादरात्तद्वदनेन्दुबिम्बं
पीत्वा दृगन्तैः परितृप्तिमीयुः ।। ५२

रम्यां प्रपां समधिगम्य चिरं तृषार्ता-
स्तत्पालिकश्लथदुकूलकुचात्तचित्ताः ।
बध्वाऽञ्जलिं विरलिताङ्गुलिसन्नियोगं
मन्दं पपुः प्रतिकलं पथिकाः पयांसि ।। ५३

परितः कुसुमानि पाटलनां
परिकीर्णानि विरेजुरुज्ज्वलानि ।
प्रमदेन वनश्रियश्चरन्त्याः
पदयावद्रवबिन्दुसन्निभानि ।। ५४

मृद्वीं शिरीषसुमनोलतिकामवेक्ष्य
तस्या मरन्दरसचूषणलोलुपोऽपि ।

क्लान्ता भवेदिति शनैर्बुभुजे मिलिन्दो
मुग्धामिव प्रियतमां रमणो विदग्धः ॥ ५५

समीरमान्त्रिकक्षिप्तसान्द्रधूलिविभूतिभिः ।
ग्रहग्रस्ता इव नगाः शिरस्तूर्णमघूर्णयन् ॥ ५६

ग्रीष्मेण सर्वमवनीतलमेक्ष्य तान्त-
मुत्सादनार्थमिव तस्य पयोदवीरान् ।
धाराशरौघसहितान्नदतो नितान्तं
द्राक् प्राहिणोत् बलरिपुर्निजकार्मुकेण ॥ ५७

मुष्णन्भृशोष्णमवनेर्व्यथयन्वियुक्ता-
स्तन्वन्प्रमोदमधिकं शिखिचातकानाम् ।
धून्वन् दिशासु कुटजार्जुननीपरेणून्
प्रादुर्बभूव सुरभिः पवनः पुरस्तात् ॥ ५८

स्वैरं विहृत्य सुचिरं मुदिता नितान्तं
सर्वां प्रपूर्य पृथिवीं सलिलैश्च सस्यैः ।
पश्चात् पयोदपटलेन सितासितेन
प्रावृट् किमाविरकरोत् पलितोद्गमं स्वम् ॥ ५९

आकाशमच्छतरमाकलयन्हिमांशुं
विद्योतयन् कृशजलाः सरितो वितन्वन् ।

केकिव्रजं विधुरयन्कलहंसबृन्द-

मानन्दयन्नुदयति स्म शरद्विलासः ॥ ६०

कुर्वाणेषु ततः कदाचिदुचितं गोपेषु शक्रोत्सवं

कः शक्रो ननु दैवतं हि भवतां गावश्च गोवर्धनः ।

पूज्यास्ता अपि पूज्य एष गिरिरित्युक्त्वा तथा कारयन्

जग्राह स्वयमिन्द्रभागमखिलं दिव्यस्वरूपो हरिः ॥

श्रुत्वैतत्तदनु रुषा कषायिताक्षः

संवर्तप्रभृतिपयोधरानकाण्डे ।

आहूय व्रजमखिलं प्रचण्डवृष्ट्या

संक्लेष्टुं त्रिदशपतिर्मुमोच भीमान् ॥ ६२

चण्डानिलप्रचलिताखिलवृक्षषण्ड-

मुच्चैस्तरस्तनितदारितदिग्विभागम् ।

आसाररज्जुचयकीलितमेदिनीकं

घोरं तदा जलधरा ववृषुस्समन्तात् ॥ ६३

यद्दृष्ट्या परिपीडितव्रजकुलत्राणाय नारायणः

सावेगं वहति स्म पाणिकमलेनोन्मूल्य गोवर्धनम् ।

अग्रे तद्दशषट्सहस्रयुवतीपीनस्तनक्ष्माधरा-

नुद्धर्तुं प्रथमं कृतः परिचयस्तेनेति मन्यामहे ॥ ६४

इत्थं गुप्ते गोकुले तेन वीर्या-
न्मिथ्यावृत्तः सर्वथा सत्रपस्सन् ।
तैस्तैः कृष्णं सामभिः सान्त्वयित्वा
पाकारातिर्नाकिलोकं जगाम ॥ ६५

गङ्गाधराध्वरिसुतो नरसिंह्मसूरे-
र्यस्त्र्यम्बकाध्वरिमणेश्च सुधीः कनीयान् ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभेऽजनि मुकुन्दविलासनाम्नि ॥ ६६

॥ इति श्रीमुकुन्दविलासे तृतीयस्सर्गः ॥



## ॥ चतुर्थः सर्गः ॥

अथ तां प्रकटीकृतानुरागा-
मवलोक्य द्युमणिर्दिशं प्रतीचीम् ।
अनया किमसौ विहर्तुमिच्छन्
अनुरक्तोऽभिससार मन्दमन्दम् ॥ १

व्रजति द्रुतमेव घर्मरश्मौ
व्रजत द्रागपि यूयमात्मनीडम् ।

इति निस्वनितैस्ततैस्समन्ता-
त्रिजगादेव मिथः पतत्रिवर्गः ॥ २

अधिपूर्वपयोधि मग्नपूर्वः
कृतमाध्यन्दिनमज्जनोऽधिगङ्गम् ।
चरमाम्बुनिधेस्तटं प्रपेदे
किमु सायन्तनमज्जनाय भानुः ॥ ३

सुरवर्त्मपुटे कराग्नितप्तं
दिनकृन्मण्डलजातरूपगोळम् ।
सहसा समयस्सुवर्णकारः
परिनिर्वापयति स्म पश्चिमाब्धौ ॥ ४

खुरघट्टसमुत्थसान्द्रधूलि-
व्रजविस्तारपवित्रिताखिलाशम् ।
निजवत्सविलोकने समुत्कं
त्वरितं घोषमवाप गोकदम्बम् ॥ ५

कुमुदे भजति क्रमात् विकासं
मुकुलत्वं च शनैश्शनैस्सरोजे ।
उभयत्र च गन्तुमक्षमत्वात्
क्षणमासन् विकला इव द्विरेफाः ॥ ६

निजतापधनं ममत्वबुद्ध्या
रविणा न्यासतया समर्पितं तत् ।
तदिदं हृदयाब्जकोशगुप्तं
निशि चक्रे किमु चक्रवाकयुग्मम् ॥ ७

अनुलिप्तसमस्तदिग्विभागं
परिणुन्नाखिलनेत्रनेत्रभावम् ।
शनकैरविशत्तमः समन्ता-
दनभिव्यक्तसमाऽसमप्रदेशम् ॥ ८

घनघूत्कृतिसान्द्रिताखिलाशं
कलितत्रासविनिद्रकाकलोकम् ।
परिमुक्ततमस्तमिस्रवत्यां
निशि कामं व्यचरद्दिवान्धवृन्दम् ॥ ९

रविणास्तमुपेयुषा करा ये
परिमुक्ता अभवन् गृहेषु दीपाः ।
परिपीय तमांसि तानि विष्व-
ग्ववमुः कज्जलकैतवात्त एते ॥ १०

निजगर्जितकैतवेन शंसन्
विधुमानर्तयितुं द्युरङ्गभूमौ ।

अकरोत् परिपाण्डु वासवाशां
प्रतिसीरां[1] सरिदीशसूत्रधारः ॥ ११

करसङ्कुलिताखिलोर्मिमालं
जलधिं द्रागवगाह्य शीतरश्मिः ।
तमसां पटलं ततो विभिन्द-
न्नुदयाद्रेश्शिखरं समारुरोह ॥ १२

प्रसभं विधुना विभिद्यमानं
सुतरां त्रस्तमिवान्धकारकूटम् ।
घनकुञ्जगृहेषु जीर्णकूपे-
ष्वपि च क्ष्माधरकन्दरेषु लिल्ये ॥ १३

हरितो मसृणास्तमोभिरिन्दौ
धवलीकुर्वति कौमुदीसुधाभिः ।
व्यरुचन् कणिकास्तदुद्गता या
गगने ताः खलु तारकापदेशात् ॥ १४

शशिलक्ष्मणि रोहिणीदृगम्भो-
रुहलग्नाञ्जनबिन्दुतां विभाव्य ।

---

1 प्रतिसीरा - A screen, Curtain.

अलिनादमिषान्मिथो वदन्त्यो
विहसन्ति स्म सलीलमुत्पलिन्यः ॥ १५

कुमुदेषु विकस्वरेषु कामं
मरुदुल्लोलतरङ्गकम्पितेषु ।
भ्रमरा मुदितास्समन्वभूव-
न्निव सन्तः किमु लोलिकाविहारम् ॥ १६

रुचयश्शशिनस्तरोरवस्ता-
त्प्रविकीर्णा विटपान्तरान्तरोत्थाः ।
पतितान्यनिलश्लथानि विष्व-
क्कुसुमानीव विरेजुरुज्ज्वलानि ॥ १७

रजनीकररश्मिभिस्तदानीं
कृतसम्पर्कतया मुहुस्स्रवन्तः ।
शशिकान्तधराधरा धरण्यां
त्रिदशेन्द्रद्विरदं समन्वकुर्वन् ॥ १८

अनुरूपविभूषणाभिरामाः
कलिताच्छधवलांशुकावकुण्ठाः ।
अवनावभिसारिकाश्चरन्त्यः
तुहिनांशोरधिदेवता इवाऽऽसन् ॥ १९

हिमदीधितिरश्मिपारणाभिः
प्रतिलब्धप्रमदाश्रुकोरवर्गाः ।
अमुमत्र ससर्ज यस्तमुच्चै-
र्विधिमातुष्टुवुरारवापदेशात् ॥ २०

अथ दैत्यमरिष्टसंज्ञमेकं
वृषवेषं विचरन्तमेक्ष्य शौरिः ।
अवलम्ब्य विषाणयोर्बलेन
त्वरितं प्रेतपतेः पुरं निनाय ॥ २१

शरदुज्ज्वलचन्द्रचन्द्रिकाभि-
र्विलसन्त्यां निशि जातु गोपिकाभिः ।
सहितस्स करीव [1]वाशिताभि-
र्विजहाराऽथ यथाऽभिलाषमित्थम् ॥ २२

मुखरे निनदे विपश्चिकाना-
मनुगायत्यपि गोपिकासमाजे ।
कलयन् प्रमदेन वेणुनादं
मुरवैरी मधुरं जगौ तदानीम् ॥ २३

---

1 वाशिताः - Female elephants.

चिकुरप्रकराम्बरे मुकुन्द-
ग्रथिताभिर्नवपुष्पतारकाभिः ।
परितःपरिवेष्टितेन काश्चि-
न्मुखचन्द्रेण विरेजुरुज्ज्वलाङ्ग्यः ॥ २४

इदमञ्जनमक्षिसीम्नि फाले
तिलकं यावरसं तवाधरोष्ठे ।
कलयाम्यहमित्यवाप्तदम्भः
स हि कासाञ्चिदजिघ्रदाननानि ॥ २५

रहिताभरणास्समीक्ष्य काश्चि-
न्मनसा तत्क्षणनिर्मितैरनेकैः ।
परिभूषयता विभूषणैस्ताः
समदृश्यन्त मुदाऽमुनाऽङ्गकेषु ॥ २६

हरिचन्दनचर्चनापदेशा-
दथ कासांश्चिदसौ कुचाद्रिकूटान् ।
निशितैर्नखरैर्निगूढमन्द-
स्मितगण्डं विलिलेख मन्दमन्दम् ॥ २७

शिथिलाम्बरनीविसन्निवेश-
च्छलतः काश्चिदनेन पङ्कजाक्ष्यः ।

जघनेषु घनेषु दत्तहस्ता-
श्चकितापाङ्गतरङ्गिता बभूवुः ॥ २८

शयितासु समेत्य कासुचित् प्राक्
तरुणीषु श्वसितोच्चलत्कुचासु ।
व्यजनेन स वीजयन्नमूषां
कटिदेशाद्वसनान्यपाचकार ॥ २९

अथ कासुचिदास्थितासु तावद्-
दृढसंवाहनदानकैतवेन ।
शनकैरयमङ्गुलीभिरासां
परिपस्पर्श वराङ्गमङ्गनानाम् ॥ ३०

रशनाकलनच्छलेन कासां-
चिदसौ [1]वल्लवपल्लवाधराणाम् ।
सहसा शिथिलीचकार शौरि-
र्वसनग्रन्थिनिवेशमङ्गुलीभिः ॥ ३१

अथ तस्य विजृम्भितासु चेष्टा-
स्वधिकं पञ्चशरेण विद्धमर्माः ।

---

1 वल्लवानां [पल्लव इव अधरः यासां ताः] पल्लवाधराः गोपस्त्रियः तासाम् ।

व्रजपङ्कजलोचनाः समस्ताः

प्रथयन्ति स्म निजानुरागमित्थम् ॥ ३२

गतिशिक्षितमल्लिकाक्षबृन्दं

सहसादस्सविधं समेत्य काचित् ।

ब्रुवतीव किमप्यमुष्य कर्णे

समुदञ्चत्पुलकं चुचुम्ब गण्डम् ॥ ३३

मुरजेतरि कुत्रचिन्निविष्टे

निभृताङ्घ्रिस्तरुणी समेत्य काचित् ।

अमुमाशु जघान पृष्ठभागे

निजपीनस्तनकुम्भकुड्मलेन ॥ ३४

शनकैरमुना समं सहर्षं

विचरन्त्या व्रजसुभ्रुवा कयाचित् ।

अवलम्ब्य करः करेण तस्य

द्रुतमात्मस्तनभूधरे न्यधायि ॥ ३५

स्थितमेक्ष्य[1] पराङ्मुखं मुकुन्दं

सविधं काचिदुपागताऽस्य मन्दम् ।

---

1 आङ्पूर्वकईक्ष्धातोर्ल्यबन्तः प्रयोगः ।

अपिबन्मधुराधरोष्ठबिम्बं
करपद्मोन्नमितानन मृगाक्षी ॥ ३६

अथ काचिदतीव मुग्धभावा
सविधं प्राप्तुमनीश्वरा मुरारेः ।
अनिमेषमपाययत्तदानीं
वदनाब्जं विमलान् कटाक्षभृङ्गान् ॥ ३७

श्रवणोत्पलसौरभस्य लोभात्
भ्रमरं काचिदवेक्ष्य निष्पतन्तम् ।
भयकैतवतस्समालिलिङ्ग
द्रुतमात्मस्तनमुद्रिताङ्गमेनम् ॥ ३८

स्ववशीकृत एव वल्लवीभि-
र्बत मे दुर्लभ एष इत्यवेत्य ।
अमुमाशु तदा विलिख्य चित्रे
मुहुरालिङ्गति चुम्बति स्म काचित् ॥ ३९

अधिकृत्य मुकुन्दमेव काचित्
प्रथयन्ती नितरां निजानुरागम् ।
वनिता विविधं जगौ सहर्षं
कलवीणाविहितप्रपञ्चमुच्चैः ॥ ४०

मुरजेतरि कुञ्जपुञ्जलीने
निभृतं काचिदुपेत्य पृष्ठतोऽस्य ।
अधरीकृतपद्मडम्बराभ्यां
पिदधाति स्म विलोचने कराभ्याम् ॥ ४१

अनुरागवतीषु गोपिकासु
प्रतिपन्नोऽयमनेकतां मुकुन्दः ।
विविधान् विरचय्य बन्धभेदा-
[1]नकृतैनाः सुखपारवश्यमुग्धाः ॥ ४२

कुतुकेन स गोपकोमलाङ्ग्याः
कुचयुग्मं करयोर्युगेन गृह्णन् ।
लिकुचद्वितयेन पञ्चबाणं
धुरि संद्रष्टुमिवोद्यतो रराज ॥ ४३

अधरोष्ठरसासवं पिपासु-
र्विहरन् द्रागुपरीन्द्रनीलिकाभिः[2] ।
अलिराज इवायमम्बुजाक्षो
रमयन् कामपि पद्मिनीं बभासे ॥ ४४

---

1 मुकुन्दः एनाः सुखपारवश्यमुग्धाः अकृतेति अन्वयः ।
2 The indigo plant (Moss)

विहरन् स कयाचिदम्बुजाक्ष्या
कलिताऽन्योन्यशरीरसन्निवेशम् ।
निगमानिव मान्मथान् ग्रहीतुं
प्रतिपेदे [1]शफराकृतिं मुरारिः ॥ ४५

निजबिम्बमवेक्ष्य कौस्तुभान्त-
र्गतमन्यप्रमदाधिया विहारे ।
सुदृशश्शिथिलत्वमुद्वहन्त्या
हृदयज्ञः पिदधे तमम्बुजाक्षः ॥ ४६

कुचशैलभराद्वलग्नभङ्गो[2]
रभसाद्वक्षसि मा स्म भूद्वलन्त्याः ।
इति किन्नु करद्वयेन कस्या-
श्चिदयं तौ वहति स्म कैटभारिः ॥ ४७

मुखरीकृतमेखलं समुद्य-
द्विमलस्वेदपयःकणोज्ज्वलास्यम् ।
उरसि क्षणमात्रमस्य काचि-
च्चलमानेव बभौ तटित्पयोदे ॥ ४८

---

1 A kind of glittering fish.

2 The waist.

निबिडे तमसां भरैर्निकुञ्जे
रममाणा कथमप्यनेन मुग्धा ।
विटपान्तरनिर्गतेन्दुपादै-
र्बत काचिच्चकिता च लज्जिताऽऽसीत् ॥ ४९

अमुना सुचिरं विहृत्य काचित्
पतिता वक्षसि कुड्मलीकृताक्षम् ।
मनुते स्म तदेति निर्वृताङ्गी
किमुत स्वर्ग उतापवर्ग एषः ॥ ५०

स्मरसङ्गरवेगतः श्रमार्ते
मुरविद्वेषिणि काचिदम्बुजाक्षी ।
शनकैस्तमथो विधाय चक्रे
सुदृढाश्लेषतयाऽऽशु निर्वृताङ्गम् ॥ ५१

पुलकस्फुरदङ्गकस्य कस्या-
श्चिदमुष्योरसि वेगतो वलन्त्याः ।
रशनोदितकिङ्किणीनिनाद-
च्छलतः शिक्षयति स्म बन्धभेदान् ॥ ५२

अमुना सह तास्सहर्षमित्थं
रममाणाः सहसा श्रवःकठोरम् ।

निनदं निशमय्य कुड्मलानां
चकिताश्चञ्चललोचना बभूवुः ॥ ५३

अरुणेष्वरुणप्रभाभिराशा-
वलयेषु श्लथतारके च नाके ।
हरति स्म हरिर्निजस्वरूपा-
ण्यनुकान्तं प्रतिदर्शितानि मन्दम् ॥ ५४

[1]बहुतापमपहाय तस्थिवांसं
परितस्संपरिवार्य कैटभारिम् ।
समदृश्यत वल्लभाङ्गनाना-
मलसामीलितलोचनस्समाजः ॥ ५५

हरिणा कृनकामसङ्गरां मां
कथयेयुर्बत मामितीदृशीम् ।
अविभाव्य बहुत्वमस्य ताभि-
र्भयमन्योन्यविलोकनेन दध्रे ॥ ५६

अथ मस्तकमस्तभूधरस्य
द्रुतमस्मिन्नुपयाति शीतभानौ ।

---

1 बहुत्वम् ।

मुदितेन मुरारिणा विसृष्टा
ययुरित्थं निजसद्म नीरजाक्ष्यः ॥ ५७

शिथिलालकवान्तपुष्पजातै-
रिव काश्चिन्मदनं मुदाऽर्चयन्त्यः ।
निरगुर्व्रजसुभ्रुवस्तदानीं
कथमप्युज्झितमन्मथा भवांशाः ॥ ५८

वसनं करपल्लवेन काश्चित्
परिगृह्य श्लथनीविगोपकन्याः
मुखरीकृतदिङ्मुखाः समन्ता-
न्निनदैर्निर्ययुरङ्घ्रिभूषणानाम् ॥ ५९

रदनक्षतचिह्निताधरोष्ठं
स्थगयन्त्यः करपल्लवेन काश्चित् ।
नखरैर्व्रणिताङ्गका व्रजन्त्यो
विदधुः किंशुकवीरुधां विलासम् ॥ ६०

इति विविधविलासैर्वल्लवीनां वनान्ते
शरदधिकविराजद्राजबिम्बाभिरामाम् ।
मुररिपुरतिवाह्य प्राप्तहर्षस्त्रियामां
द्रुतमयमपि कल्ये घोषवाटं प्रपेदे ॥ ६१

गङ्गाधराध्वरिसुतो नरसिह्मसूनो-
यँस्त्र्यम्बकाध्वरिमणेश्च सुधीः कनीयान् ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ६२

॥ इति श्रीमुकुन्दविलासे चतुर्थः सर्गस्समाप्तिमगमत् ॥



॥ पञ्चमः सर्गः ॥

गोपीनां तुहिनरुचिर्मुखानि दृष्ट्वा
नन्वेतैरपि समता मया न लब्धा ।
का वार्ता मुखकमलेन कैटभारे-
रित्थं किं न्यपतदहोऽम्बुधौ निमज्ज्य ॥ १

का सन्त्याज्या ननुविरहव्यथेति काका-
या शंसन्निव चरणायुधश्चुकूज ।
बन्धुर्वस्त्वरितमुदेष्यातीति भृङ्गा
झङ्कारैरिव जगदुः सरोजिनीभ्यः ॥ २

पीयूषत्विषि चरमाम्बुधौ निमग्ने
घर्मांशावनुदितवत्युषस्समन्तात् ।

आरुण्यात् विशकलतारकां परत्वा-
दाजह्रे रजनिमुखश्रियं तदानीम् ॥ ३

कन्दर्पाहवजनितश्रमाकुलानां
सुप्तानां व्रजसरसीरुहेक्षणानाम् ।
सम्प्राप्तं गृहतरवः शशंसुरुच्चैः
प्रत्यूषं चटकविरावकैतवेन ॥ ४

शीतांशुं चरमधराधरस्य शृङ्गा-
दम्भोधौ कुमुदवनी समीक्ष्य मग्नम् ।
तद्दुःखादिव विनिमीलिता तदानी-
मामोदं व्यसृजदनावृताऽलिबृन्दा ॥ ५

उद्गच्छद्दिनकरकोमलप्रभाभि-
र्व्यालिप्ता निबिडतरं विरेजुराशाः ।
काश्मीरव्यतिकरजातगीतभाभि-
र्वासोभिस्सुदृश इवाऽवकुण्ठिताङ्गाः ॥ ६

आजिघ्रन्मुखममरेशदिङ्मृगाक्ष्याः
भव्याभिर्भुवमनुरञ्जयन्प्रभाभिः ।
आलिङ्गन् करनिकरेण पद्मिनीं द्रा-
गारोहन्दिवमुदियाय सप्तसप्तिः ॥ ७

उत्तिष्ठेत्यभिदधतेव भृङ्गनादै-
स्सूर्येण स्वकरविभावितप्रबोधा ।
व्यातेने कमलवनी विजृम्भमाणा
स्वामोदैः सुरभितदिङ्मुखा तदानीम् ॥ ८

सायाह्ने किमु कमलेषु सामरूपा-
स्तिग्मांशुत्विष इह केसरात्मनाऽऽसन् ।
तेभ्यः किं भ्रमरकुलैरधीत्य सामा-
न्युद्गानं मदभरितैरकारि विष्वक् ॥ ९

उज्झित्वा कुमुदवनानि चञ्चरीकाः
फुल्लाम्भोरुहविपिनानि सेवमानाः ।
ये तेभ्यो नवमकरन्दमाप्तुकामाः
झङ्कारैर्जगदुरिव प्रियाणि भूयः ॥ १०

अर्यम्णि स्पृशति करैः प्रसह्य भीताः
सङ्कोचं ध्रुवमधिजग्मुरुत्पलिन्यः ।
अन्याङ्गव्यतिकरसंभवाभिषङ्गं
लोके जात्वपि नो सतीकुलं सहेत ॥ ११

वारुण्यादरण[श्रयण]वशाद्विधौ प्रमत्ते
पूष्णस्तामशरणतां गतां विभाव्य ।

उद्दीप्रद्युमणिकरः स्पृशेदितीव
द्राक् तारा नभसि विलिल्यिरे भयेन ॥ १२

व्याकीर्णं गगनतले विलोक्य विष्वक्
तारामौक्तिकनिकुरुम्बमंशुमाली ।
एकैकं करनिकरेण मन्दमन्दं
सङ्गृह्णन्निव निदधे तदात्मधाम्नि ॥ १३

आपीताऽनुपदनिबद्धमुग्धवत्सा
विन्यस्ताऽमलखुरपूतभूमिभागाः ।
आभीरैस्त्वरिततरमनुगम्यमाना
निर्जग्मुर्निजभवनाय गोपगावः ॥ १४

वेश्मानि व्रजसरसीरुहेक्षणानां
प्रत्यूषे रुचिरविलिप्तगोमयानि ।
तद्गात्रोल्लसितहरिन्मणिप्रभाभि-
र्व्याकीर्णान्यभित इव क्षणं विरेजुः ॥ १५

स्रस्तांसायतभुजयुग्मकृष्टरज्जु-
व्यामल्गत्कुचजघनत्रिकाभिरामम् ।
उद्भिन्नश्रमजलबिन्दुसुन्दरास्यं
गायन्त्यो दधि नवमङ्गना ममन्थुः ॥ १६

अम्भोदस्तनितविलासमादधानं
गम्भीरं दधिमथनर्ध्वानं निशम्य ।
बिभ्राणा विततविचित्रपिञ्छभारा-
नुत्केका ननृतुरधिव्रजं मयूराः ॥ १७

फालान्तर्विलसितधौतभूतिपुण्ड्रो
दोर्मूले विनिहितपुस्तकः प्रधावन् ।
अन्योन्यं कलहमकाण्ड एव कुर्व-
न्नव्राजीद्गुरुसदनं व्रजो वटूनाम् ॥ १८

गायत्रीं क्वचिदजपन् क्वचिच्च मन्त्रै-
र्ब्रह्माणः क्वचिदुपतस्थिरे दिनेशम् ।
धूमोद्यत्प्रचुरपरीमलं हवींषि
त्रेतायां जुहुवुरथाहिताग्नयोऽपि ॥ १९

सोत्कण्ठं रजनिवियोगिनो विहङ्गान्
युञ्जानान्निजयुवतीभिराप्तहर्षान् ।
आलोक्य व्रजसुदृशां व्रजस्तदानी-
मस्मार्षीन्निशि कृतमारसङ्गरस्य ॥ २०

केशीति त्रिदशरिपुर्वधाय कंसे-
नादिष्टस्तदनु समाजगाम कश्चित् ।

दृष्ट्वा तं मुररिपुरश्वरूपभाजं
व्याधूनोद्द्रुतमसुभिर्व्ययूयुजच्च ॥ २१

आकर्ण्य प्रमथनमस्य नारदोक्त्या
कंसेन त्वमिह मुरारिमानयेति ।
अक्रूरस्त्वरिततरं तदा नियुक्तो
नन्दस्यालयमगमन्निनीषुरेनम् ॥ २२

दृष्ट्वा तं तदनु निजालयं प्रपन्नं
गोविन्दे विहितयथोचितोपचारे ।
श्वो गन्तास्म्यहमिति जल्पति प्रपेदे
तिग्मांशुर्गगनतलस्य मध्यदेशम् ॥ २३

हंसेषु प्रविकचपुण्डरीकषण्ड-
च्छायायां मुकुलितलोचनं स्थितेषु ।
अन्योन्यव्यतिकरतो जनैर्न जज्ञे
हंसत्वं पृथगपि पुण्डरीकभावि ॥ २४

आसक्ता मधुनि मधुव्रतास्तदानीं
संप्राप्तक्वथनमिदं व्युदस्य वेगात् ।
अत्यर्थं रविकिरणैः सुदह्यमानाः
क्रन्दन्तो दिशि दिशि बभ्रमुर्निराशाः ॥ २५

कान्ताभिस्सह वलभीषु सञ्चरन्त-
स्तप्तास्ता इति दधतः प्रदेशभाजः ।
तत्रापि प्रसरमुपेत्य भानुभासां
पक्षाभ्यामपिदधति[1] स्म ताः कपोताः ॥ २६

सारङ्गास्तपनकरैः करालिताङ्गाः
सन्त्यक्ताखिलनवशाद्वलप्रचाराः ।
छायायामवनिरुहां सुखं निषण्णाः
रोमन्थं मुकुलितलोचना वितेनुः ॥ २७

शैत्यं द्रागपहरता सरोजलाना-
मादिष्टा निजकिरणाः प्रचण्डभासा ।
अन्वेष्टुन्तदिह निलीनमन्तरम्भ-
स्सञ्चेरुःशफरकदम्बकापदेशात् ॥ २८

आरूढे सुरपथमध्यमुष्णरश्मा-
वत्यर्थं करनिकरैरमुष्य तप्ताः ।
शृङ्गाग्रैर्वनमहिषा निपानतोया-
न्याघ्नन्तस्त्वरिततरं समाश्रयन्त ॥ २९

---

1 अपिदधति - धा with अपि or पि to cover.

बन्धं यो मुकुलितकैतवान्तराळे
संप्राप्तः स खलु दिवाकरोग्रपादैः ।
अत्यर्थं क्वथनमुपागते मरन्दे
चक्रन्द भ्रमरगणो भृशं प्रतप्तः ॥ ३०

व्यातेने धरणिरुहां रथाङ्गरम्यं
छायायां वलयितमालवालपाशम् ।
सन्तापादभिपटलं निलीनमन्त-
र्गुप्तेषु व्यतनुत चन्द्रलक्ष्मशङ्काम् ॥ ३१

अत्युच्चैरशिशिरदीधितेर्मयूखै-
स्संप्राप्य व्यतिकरमाशु सूर्यकान्ताः ।
सज्वालं ज्वलनकदम्बकं समन्ता-
दुद्दामं ववमुरगार्यकन्दरेषु ॥ ३२

औशीरव्यजननिरस्तघर्मखेदः
पाटीरद्रवकलिताङ्गरागहृद्यः ।
अक्रूरोपहृतकथासुधावसिक्तो
मध्याह्नः खरगुडपायसेन तुल्यः ॥ ३३

नीत्वा तां व्रजसदने निशां मुरारिः
प्रत्यूषे निरगमदग्रजेन साकम् ।

इत्थं ये कथयितुमागता नृपं तं
लोकस्तानकलयदन्तकस्य दूतान् ॥ ३४

अत्यर्थं विरहकदर्थिता बभूवुः
गोविन्दं चलितमवेक्ष्य गोपकान्ताः ।
सन्तापप्रशमनकारणानि तासु
प्रक्रान्तान्यपि विपरीततामवापुः ॥ ३५

आलीभिर्नवनलिनीदलोपक्लृप्ता-
मस्वस्था व्रजवनिताः प्रपद्य शय्याम् ।
क्लृप्तेयं किमु बत केतकीदलौघै-
रित्येता निभृतमुपालभन्त काश्चित् ॥ ३६

निक्षिप्तं हृदि विरहार्तिभाजि काश्चित्-
निश्च्योतं बहुलपटीरपल्लवानाम् ।
निष्टप्तं बत कमपि द्रवं व्यजानन्
निर्विण्णे क इव सुखोदयाय भावः ॥ ३७

आलीभिर्मृदुलमृणालभूषणेषु
प्रत्यङ्गं परिकलितेषु पङ्कजाक्ष्याः ।
स्निह्यन्त्योऽप्यहिवलयेन भर्त्सयन्ते
हन्तैताः कथमिति मन्वते स्म काश्चित् ॥ ३८

किं वा त्वां सुखयति ताळवृन्तवातः
पृष्टा इत्युपचरता जनेन काश्चित् ।
किं सख्यः शिशिराय वीजयन्ति मामि-
त्यप्राक्षुर्न तु परिवीजनं व्यजानन् ॥ ३९

अत्यर्थं विरहहुताशनेन तप्ता
इत्यादौ कलितपटीरपङ्कलेपाः ।
आलीभिस्तदनु हिमाम्बुसिक्तगात्राः
सन्तापं कतिचन नो जहुस्तथाऽपि ॥ ४०

नीत्वाऽमुं त्वरितमितः सरोरुहाक्षं
क्रूरं यश्चरितमिहेदृशं ततान ।
[1]अक्रूरः कथमभिधीयते सलोकै-
रित्येतान् व्रजहरिणीदृशो निनिन्दुः ॥ ४१

पश्चार्धं गगनमलङ्करोति भानुः
किं वाऽद्य व्रतदिवसो यतो न भुङ्क्षे ।
इत्युक्ताः कतिचन सुभ्रुवः सखीभि-
र्हा ! दैवं परिणतमीदृगित्यवोचन् ॥ ४२

1 ईदृशक्रूरकर्मकारिणमक्रूरं कथं वदन्ति जनाः ।

का वा सा ? सखि ! मनसि व्यथा तवास्ते
क्षामत्वं भजति तनुर्यया निकामम् ॥
इत्येवं कतिचन गोपिकासखीभिः
पृष्टा या व्यथयति सेयमित्यवोचन् ॥ ४३

मां पूर्वं क्षणमनवेक्ष्य विह्वलाङ्गः
किं प्राप्तामपि सविधं न भाषसेऽद्य ।
इत्यालीवचननिबोधिताश्च काश्चि-
न्न प्रापुर्व्रजहरिणेक्षणाःस्वबोधम् ॥ ४४

गोविन्दाहृतहृदया विलासवत्यः
सञ्जाता बत सदसद्विवेकमुग्धाः ।
सन्तप्ताः स्मरमलयानिलेन्दुपादै-
रित्येतान् करुणमुपालभन्त सर्वाः ॥ ४५

तप्तां मामतिसुखयिष्यतीति बुद्ध्या
शीतांशुः सुतनु मया निषेव्यमाणः ।
हा हन्त ! प्रतपति भानुवन्मयूखै-
र्विस्रब्धे किमुचितमस्य पातकित्वम् ॥ ४६

संभूतिर्ननु कलशाम्बुधेर्निवासः
प्रालेयाचलतनयाधिनाथमौलौ ।

स्ववृंक्षाः सहजनुषाः, स्वसा च लक्ष्मीः,
इन्दो किं वरं अबलावपीडनं ते ? ॥ ४७

चन्द्र त्वं विरहिजनव्यथां वितन्वन्
केनाऽऽदौ हरनिटिलाग्निना न दग्धः ।
ग्राहैः किं न च कबलीकृतः पयोधौ
शप्तस्सन्नपि गुरुणा न किं प्रणष्टः ॥ ४८

संभूतिस्तव विषधौ विषेण साकं
बन्धुत्वं विषगलमस्तके निवासः ।
धिक् दोषाकर इति च श्रुतोऽसि नाम्ना
तन्मां त्वं व्यथयसि युक्तमेव तत्ते ॥ ४९

नाम्भोधेः कतिभिरभावि बुद्बुदौघै-
रिन्दो ! कः कथय ततस्तवातिरेकः ।
आः ! ज्ञातं वहसि वपुर्मलीमसं त्वं
चारित्रं तदुचितमित्थमादधासि ॥ ५०

अत्युग्रैः करनिकरैरिहाङ्गकानि
प्रत्यक्षं(त्यङ्गं) प्रतपति पापिनि त्वयीन्दो !
विख्यातिश्शिशिरकरः सुधाकरश्चे-
त्युद्भूताऽसदृशतया न तु प्रतीष्टा ॥ ५१

हीनः सन्नुदयसि सर्वथा कलाभिः
संप्राप्योदयमचिराद्विनङ्क्ष्यसि त्वम् ।
ईदृक्षः किमनपराधिनीं मृगाङ्क!
क्लिष्टां [क्लिन्नां] मां रचयसि पातकस्य पात्रम् ॥

नन्वेतत् कुचयुगलं न कोकयुग्मं
वेणीयं न भवति सिह्मिकातनूजः ।
वक्त्रं मे न तु सरसीरुहं वृथा मां
क्लिश्नासि, प्रतिभटसंश्रयो न तेऽहम्? ॥ ५३

पञ्चेषुः प्रसवधनुस्त्वमङ्गहीनो-
ऽप्येवं मां व्यथयसि पातकिन् मनोभूः! ।
साङ्गश्चेद् दृढधनुराप्तपूर्णशस्त्रः
का वार्ता भवतु विधातुरेव सृष्टिः ॥ ५४

कुर्वाणस्त्वमचिराय कर्म घोरं
निर्दग्धस्सकलहितैषिणा शिवेन ।
शर्वाण्या पुनरपि जीवितोऽसि यत्तत्
किं तस्याः समुचितमीदृशेऽपि पापे ॥ ५५

संभूतो भवसि यतः प्रसूनधन्वन्!
कालुष्यं जनयसि तत्र चेतसि त्वम् ।

नो लज्जाऽजनि भुवि विक्रियां विधातुः

का वा ते बत दयनीयता मयि स्यात् ॥ ५६

नैर्घृण्यादियमबलेति मन्यमानः

प्रत्यग्रं [ह्यत्युग्रं] प्रहरसि सायकैर्यथाऽस्मान् ।

कन्दर्प ! प्रहर तथैव तं मुरारिं

वीरं त्वां जगति ततो विभावयामः ॥ ५७

यद्भीतः स्मर ! भवतो भवो भवानी-

मर्धाङ्गे हृदि च दधौ रमां रमेशः ।

वाग्देवीमपि वदने बिभर्ति वेधा-

स्तच्चित्रं भृशमबलां विमर्द्य किं ते ? ॥ ५८

कर्तुं प्रागधिजलधि प्रसह्य सेतुं

कुर्वद्भिस्सकलकुलाचलप्रमाथम् ।

स्थानं ते न स मलयाचलस्तदानी-

मुत्खातः [अनिलज] पवनवलीमुखैः किमासीत् ॥

ईदृक्षां विरहिजनव्यथां वितन्वन्

सञ्चारं कलयसि सर्वतो यतस्त्वम् ।

सर्पाणामिव पवनाशनप्रसिद्धि-

मिथ्याऽहं पवन ! विभावयामि तस्मात् ॥ ६०

हित्वा तं निरुपमसौरभाभिरामं
पाटीरं कमपि गुणं तवाऽनुरूपम् ।
स्थाने किं पवन! भुजङ्गफूत्क्रियाभिः
संप्राप्य व्यतिकरमुष्णतामुपैति[षि] ॥ ६१

अत्यर्थं मृदुरिति शीत इत्यपि त्वं
विस्रम्भादनिल! मया निषेव्यमाणः ।
चण्डत्वं समधिकमाश्रितः किमेवं
धैर्यात् रे! बत यतसे विमूलनाय? ॥ ६२

सम्भूता ननु भवतस्तनूनपादि-
त्यश्रौषं यदनिशमागमप्रपञ्चे ।
हा हन्त त्वयि दहति प्रकाममङ्गं
प्रत्यक्षं तदनिल! सांप्रतं व्यलोकि ॥ ६३

निन्दन्त्यश्शशिपञ्चबाणपवनानित्थं मुहुर्गोपिकाः
ध्यायन्त्यः सततं सरोजनयनं रागात्तदेकाशयाः ।
पश्यन्त्यः परितस्तमेव सविधं प्राप्य सङ्कल्पतः
क्रीडन्त्यो विविधं यथेच्छममुना प्रापुस्तदा निर्वृतिम् ॥

गङ्गाधराध्वरिसुतो नरसिह्मसूरे-
र्यस्त्र्यम्बकाध्वरिमणेश्च सुधीः कनीयान् ।

काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ६५

॥ इति श्रीमुकुन्दविलासे पञ्चमः सर्गः ॥



## ॥ षष्ठः सर्गः ॥

चलितो मधुरामसौ रथी
पथि हेमन्तविकस्वरां धराम् ।
अवलोक्य मुरारिरग्रजं
कथयामास कथां तदाश्रयाम् ॥ १

स्वमुदस्य तुषारसाध्वसा
गतिमालिङ्गितुमिन्दिरा ययौ ।
इति नाम्बुरुहाणि सर्वथा-
न्यभितस्तद्विरहाच्चकासति ॥ २

तुहिनेन कृतं सरोरुहां
ग्लपनं वीक्ष्य सरोजबान्धवः ।
परिहर्तुमसौ तदक्षमो
भृशदुःखादिव मन्ददीधितिः ॥ ३

तरितुं जनता भवत्यलं
न तुषाराम्बुनिधिं सुदुस्तरम् ।
तरुणीकुचकुम्भसंश्रयात्
कृतिनः केऽपि तरन्ति सांप्रतम् ॥ ४

परितः पिहितानि यानि खे
भुवि तानि प्रसृतान्युडूनि किम् ।
इति कुन्दकुलानि संवृता-
न्यधुना भान्ति तुषारमण्डलैः ॥ ५

विरहार्तिजुषामनागसां
गणतः शापमवाप्य सांप्रतम् ।
परिभूत इवैष निष्प्रभ-
स्तुहिनांशुः परिदृश्यतेतराम् ॥ ६

नवशाड्व(द्व)लभूतलेष्वमी
पतिता भान्ति तुषारविन्दवः ।
नलिनीदलसंस्तरोपरि
च्युतमुक्ता इव पान्थसुभ्रुवाम् ॥ ७

हिममब्जविनाशकारणं
वदनाब्जं मम दूषयिष्यति ।

इति तद्धूयतो दरांशुका-
न्युपदायै ददतीव सुभ्रुवः ॥ ८

तुहिनप्रसृतिर्दिशां वधू-
वदने लोध्रपरागसंहतिः ।
तुहिनर्तुविलासिनाऽधुना
विनिकीर्णेव विभाति सर्वतः ॥ ९

मधुना मलयाचलानिलैः
वियुतः प्रागधुनाब्जसायकैः ।
असहायतयेव मन्मथः
परिजागर्ति मुहुर्मुहुस्स्वयम् ॥ १०

जगतो विजयार्थमुन्मुखे
चलिते योद्धरि पञ्चसायके ।
धरणीं समयःस्समन्ततो
हिमनीरैरिव चारु सिञ्चति ॥ ११

यदुवाच मुनिस्स वारुणिः
पतनान्ता हि समुच्छ्रया इति ।
स्फुटयत्यधुना तदप्रभः
शरदि प्राप्य समुच्छ्रयं शशी ॥ १२

विनिरुध्य महांसि भास्वत-
स्तुहिनेषु प्रसृतेषु कौशिकाः ।
विहरन्त्यकुतोभया भयं
जनयन्तः परभृत्कदम्बके ॥ १३

कुसुमेषु तुषारवारिभिः
परिकीर्णेषु मधुव्रतव्रजः ।
अनवाप्य मरन्दमाधुरीः
भ्रमति क्रन्दति किञ्च मुह्यति ॥ १४

कमलेषु सपत्रकुड्मले-
ष्वपि मृष्टेषु तुषारवृष्टिभिः ।
ददति क्षणमम्बुजाकरे
कलहंसाः धवलाम्बुजभ्रमम् ॥ १५

रभसेन विजित्य सङ्गरे
ननु घर्मस्तुहिनेन सांप्रतम् ।
निवसत्यबलाकुचाचले-
ष्वधिकारासदनं निवेशितः । १६

धरणीधरगैरिकस्थले
प्रसृता भाति तुषारसंहतिः ।

नवधूमलता हुतोत्थिता
स्फुरदङ्गारघने हुताशने ॥ १७

परिमुच्य सरोजभूषणा-
न्यददानाः प्रमदं विहारिणाम् ।
न चकासति हन्त दीर्घिकाः
सुदृशः कोपकषायिता इव ॥ १७

इति सूक्तिभिरम्बुजेक्षणो
बलरामस्य मनः प्रहर्षयन् ।
विविधानि वनानि लोकयन्
पदवीकाममपि पर्यलेखयत् ॥ १९

(पञ्चभिः कुलकम्)

विकसत्कुमुदावलीस्रजा
परिणद्धासितशैवलालकाम् ।
विदलत्कुसुमैस्तटद्रुमै-
र्मधुरोत्तंसविराजितामिव ॥ २०

भ्रमराश्रितफुल्लपङ्कजै-
स्तिलकालङ्कृतभासुराननाम् ।

विकसच्छफरीविलोचनां

विलसच्चक्रसमुन्नतस्तनीम् ॥ २१

असिताम्बुरुहावलीपरि-

स्फुटरोमालिमनोहरोदरीम् ।

चलवीचिवलीसमुज्ज्वलां

भ्रमदावर्तगभीरनाभिकाम् ॥ २२

कलहंसकदम्बमेखलां

पुलिनोच्छ्रायिनितम्बमण्डलाम् ।

नवकाशदुकूलधारिणीं

प्रहसन्तीमिव फेनकैतवात् ॥ २३

द्विजकूजितमञ्जुभाषिणीं

जलराशेरभिसारिणीमिव ।

यमुनामवनीविलासिनीं

मृगनाभीतिलकायितां ययौ ॥ २४

यमुनासलिलैर्निजप्रभां

गमिते कैरवपङ्कजव्रजे ।

इतरेतरबोधसाधिके

मुकुलत्वस्फुटते बभूवतुः ॥ २५

असिततत्वमवाप्तमम्भसः
प्रभया कान्तमुपेत्य कातरा ।
बुबुधे सविधे विहारिणं
न मराली स च तां तथाविधाम् ॥ २६

तटमेकमुपाश्रितं मृगैं-
रितरत्तीरमभूत्तरक्षुभिः[1] ।
उभयप्रतिबिम्बमम्भसि
क्षणमृष्याश्रमविभ्रमं दधौ ॥ २७

विटपिच्युतपुष्पकैंतवात्
तटनिक्षिप्तसमुज्ज्वलांशुकाः ।
जलजच्छददर्शिताननाः
सरिदन्तर्विविशुः किमङ्गनाः ॥ २८

विहरत्कलहंसकूजित-
च्छलतः संप्रति मुग्धभाषिणीम् ।
अनुवीचि करैः स्पृशन् - रवि-
स्तनयां लालयतीव सादरम् ॥ २९

---

1 तरक्षु - Wolf

अवलोक्य जले फणीश्वरः
स्थितमब्जेक्षणमादिपूरुषम् ।
स्तुतिभिस्तमतोषयन्मुहु-
र्मुहुरक्रूर इति प्रहर्षभाक् ॥ ३०

कमठाकृतिमेत्य यो भवा-
नवहन्मन्दरमिन्दिराशया ।
अरविन्ददृगिन्दुसुन्दरा-
ननु तस्मै नतिमादधामि ते ॥ ३१

प्रलयाम्बुनिधेः स्वदंष्ट्रया
धरणीमुद्धरति स्म यो भवान् ।
परिगृह्य वराहविग्रहं
ननु तस्मै नतिमादधामि ते ॥ ३२

नृहरित्वमवाप्य यो भवा-
न्नखनिर्भिन्नहिरण्यदानवः ।
धरणीममराग्रणीरया-
न्ननु तस्मै नतिमादधामि ते ३३

अवनिं गगनं बलिं बला-
दतिखर्वाकृतिमेत्य यो भवान् ।

झटिति त्रिभिराक्रमि क्रमैः
 क्रमशः सङ्क्रमतां मनस्त्वयि ॥ ३४

क्षितिभृत्कुलमेकविंशतिं
 ननु वारान्प्रजिगाय यो भवान् ।
तदसृग्भरतीतृपत्पितॄन्
 स गतिः काश्यपसात्कृतक्षितिः ३५

अभवद्रजसा शिलाऽबला
 भवतो यस्य पदाम्बुजस्पृशा ।
तृणमस्त्रमरावरिः सखा
 स गतिर्मे दशकन्धरान्तकः ॥ ३६

हलभृद्बलवान् बलाभिधः
 प्रसभध्वंसितदानवव्रजः ।
यमुनां परिभेत्स्यते भवान्
 ननु तस्मै नतिमादधामि ते ॥ ३७

अतिशेषमहीशनं परं
 प्रथयन् धर्ममुदञ्चयन्दयाम् ।
परिमोहयति स्म यो जगत्
 ननु तस्मै नतिमादधामि ते ॥ ३८

असितासिलतालसत्करो
हयसादित्वमवाप्य यो भवान् ।
यवनैरवनिं वियोजये-
न्ननु तस्मै नतिमादधामि ते ॥ ३९

कृतमेभिरपेतविप्लवं
भवदंशैस्तदिदं जगत्त्रयम् ।
विभवं भवतस्तदद्भुतं
भगवन् वर्णयितुं यतेत कः ॥ ४०

इति तन्नुतितुष्टमानसः
चलितप्रोज्झितभानुजातटः ।
अधरीकृतगोत्रभित्पुरीं
मधुरां वीक्ष्य जगाद सोऽग्रजम् ॥ ४१

अधरीकृतविन्ध्यभूधरैः
प्रतिभिन्ना ननु सौधमौलिभिः ।
वहतीव वियन्नदी मुहुः
प्रतिसौधं जलयन्त्रकैतवात् ॥ ४२

क्षणमप्यनवाप्तविश्रमं
प्रतिपन्नश्रममंशुमालिनम् ।

नगरी सततं पताकिका-
व्यजनैर्वीजयतीव सादरम् ॥ ४३

इह सालसरीसृपावलिः
परितस्संप्रति कुण्डलीभवन् ।
विशदीकुरुते निजं फणा-
पटलप्रोन्नतसौधकैतवात् ॥ ४४

गगनं तरतो विवस्वतः
श्रमनुत्यै पुरि सौधसञ्चयः ।
पवनात्मभुवः पयोनिधौ
धुरि मैनाक इवाऽभ्युत्थितः ॥ ४५

परिघापयसि स्फुरन्त्यमी
विविधग्राहगणा भयानकाः ।
विहरन्त इवाऽभितस्तरां
जलधौ वारिधरा जलैषिणः ॥ ४६

परिघाम्बुनि बिम्बिता पुरी
तनितुं भर्तुरहर्निशं हितम् ।
विदलत्कमलोत्पलच्छलात्
पथि जागर्ति विकस्वरेक्षणा ॥ ४७

परिघाऽभिवृता पताकिको-
ज्ज्वलसौधा नगरी विभात्यसौ ।
परिणद्धपटोन्नतध्वजा
विचरन्ती तरुणीव वारिधौ ॥ ४८

अदयोद्यतभीषणाऽसिभिः
परितस्संवृतमुद्भटैर्भटैः ।
इह गोपुरदेहलीद्वयं
मरुतां विप्रतिभाति दुर्गमम् ॥ ४९

नवकाञ्चनरूप्यसद्मनां :
प्रसृतायां त्विषि सर्वतः पुरे ।
इह कोकचकोरपत्त्रिणः
प्रमदं बिभ्रति भूरि सर्वदा ॥ ५०

अयमत्र गतागतप्रजा-
चलवीचिस्फुटरत्नसञ्चयः ।
परिगर्जति राजवर्धितः
कनकौर्वो विपणीपयोनिधिः ॥ ५१

स्तुतिमाकलयन्निजारव-
च्छलतस्सौरभवस्तुसन्ततेः ।

भ्रमति भ्रमरव्रजः स्फुटः
प्रमदेनाऽधिविलेपनापणम् ॥ ५२

जितमेघरवो वणिग्वधू-
जनगानैरनुनादितो भृशम् ।
बधिरीकृतदिग्वधूश्रुति-
र्विलसत्यत्र [1]घरट्टजध्वनिः ॥ ५३

भुवमेणमदाऽधिवासितां
परितः संपततो मधुव्रतान् ।
इह मुग्धवणिग्वधूजनः
ननु तत्खञ्जधिया जिघृक्षति ॥ ५४

हृतदाडिमजम्बुविभ्रमा-
निह माणिक्यबलद्विषन्मणीन् ।
अवलोक्य शुकाश्चरन्त्यमी
प्रतिरत्नापणमृद्धसम्मदाः ॥ ५५

पुरि नीलपताकया मुहु-
र्मुहुरेतत्परिलिह्यते नभः ।

---

घरट्ट - **Grinding Stone**

अत एव बिभर्ति सर्वतो
रुचिराशा तपनोपलच्छविम् ॥ ५६

रविकान्तमहाशिलोद्गमै-
रनुमध्याह्नमपि क्वथज्जले ।
इह माङ्गलिके घटव्रजे
पचमाना इव भान्ति पुत्रिकाः ॥ ५७

धृतकाञ्चनसालभञ्जिकाः
पुरि सौधा मघवन्मणीकृताः ।
कमलाऽऽश्रितमुग्धवक्षसं
कमलाक्षं नु विडम्बयन्त्यमी ॥ ५८

मघवद्विधुकान्तबद्धयो-
र्गृहयोः सम्मिलिते मिथः छवी ।
यमुनासुरसिन्धुसङ्गम-
भ्रममेते विभृतः पुरे सदा ॥ ५९

किमु माघवनं वनं वनं
किमिदं मानसिजं सरः सरः ।
किमु केलिगिरिर्मरुद्गिरिः
प्रतियन्तीति जना विलोकिनः ॥ ६०

इति तामभितो विलोकयन्
मधुरामुच्छ्रितसालशोभिताम् ।
विविधापणवीथिकोज्ज्वला-
मभजद्राजपथं यदूद्वहः ॥ ६१

हत्वाऽथ कारुमकृतात्ममतं क्षणेन
मालाकृतं कृतमतं विनियोज्य भूत्या ।
कुब्जामृजुं निजनिदेशकरीं च कृत्वा
द्वारं मुरारिरभजन्निजमातुलस्य ॥ ६२

प्राप्तावुभौ हरिबलावधिगम्य कंसे-
नारूढमञ्चशिखरेण रुषाऽऽकुलेन ।
चाणूरमुष्टिकयुगं मदवारणश्च
व्यापादनार्थमनयोस्सहसा न्ययोजि ॥ ६३

आयान्तमेत्य करिणं बत तद्विषाणे
व्याकृष्य तूर्णमिभसादिनमाजघान ।
इत्युत्क्रुधौ झटिति धावनमादधानौ
मल्लावपि प्रहरति स्म मधुप्रमाथी ॥ ६४

इत्थं मुरारिबलयोरनयेन कंसः
प्राग्भाररोषकलुषीकृतलोचनान्तः ।

बन्धं बतैच्छदनयोरविभावितौजा-
स्तां देवकीं च वसुदेवमथो व्यनिन्दीत् ॥ ६५

उत्प्लुत्य मञ्चमभिगृह्य शिरोरुहेषु
व्याविध्य विश्वविजयी विनिपात्य भूमौ ।
आक्रम्य चोरसि हरिः प्रममाथ कंसं
रम्भावनीरुहमिव द्विरदाधिराजः ॥ ६६

अथ विनिहतकंसस्तोषिताऽमर्त्यमर्त्यः
प्रशमितजनकाम्बामानसोद्दामदाहः ।
पुरवरमधित[1]ष्ठावुग्रसेनं नृपत्वे
मुररिपुरभिषिच्य प्राप्तसान्द्रप्रमोदः ॥ ६७

गङ्गाधराध्वरिसुतो नरह्मिसूरेः
यस्त्र्यम्बकाध्वरिमणेश्च सुधीः कनीयान् ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ६८

॥ इति श्रीमुकुन्दविलासे षष्ठः सर्गः ॥



---

1 अधिपूर्वक "ष्ठा गतिनिवृत्तौ" विति धातोर्लिट प्रथमपुरुषैकवचनेऽयं प्रयोगः ।

## ॥ सप्तमः सर्गः ॥

अत्राऽनेतुं वृत्रशत्रोस्सुधर्मा-
मादिष्टस्सन् मारुतो माधवेन ।
अध्वानं तं कञ्चिदुल्लङ्घ्य दूरा-
दैक्षिष्ट द्यामालयं निर्जराणाम् ॥ १

सोऽयं हृद्यां राजतै राजहंसै-
र्मीनैर्नानारत्नवर्णैर्विचित्राम् ।
दृश्यां पद्मैः काञ्चनैरिन्द्रनीलां
गुञ्जद्भृङ्गाध्यासितैराप गङ्गाम् ॥ २

पश्चादूर्ध्वं पार्श्वतश्चान्तरिक्षं
छायाश्यामीभूततोयावहन्ती ।
व्योमन्येषा पश्यतामभ्रगङ्गा
भास्वत्कन्यामोहमाविष्करोति ॥ ३

पाथस्सङ्गात् भानुभासामधस्तात्
प्राप्तश्चाथं सत्वरं पर्युदस्य ।
वर्गाः सर्वे यादसामूर्ध्वभागे
विष्वक् यस्यामह्नि नूनं चरन्ति ॥ ४

हन्त ! स्वर्गे कान्तसंयोगजन्यं
हर्षं गङ्गाऽनश्नुवाना चिरेण ।
दुःखान्नित्योन्निद्रपद्मापदेशा-
देषा लोकैर्जागरूकाप्यते किम् ॥ ५

स्ववारस्त्रीलोचनैर्निर्निमेषै-
र्भूयो भूयः शिक्षितान्यम्बुजानि ।
उन्निद्रत्वं तादृगभ्येत्य नित्यं
यस्या नूनं भूरि शोभां भजन्ति ॥ ६

कान्तं यस्यामभ्रमुर्गाहिमानं
प्राप्ताऽऽश्लेषं पाण्डरोत्तुङ्गभङ्गैः ।
घूर्णं घूर्णं तूर्णमप्रेक्षमाणा
क्रन्दं क्रन्दं नो मनस्स्थैर्यमेति ॥ ७

क्रीडन्तीनां चङ्क्रमं द्यौवधूनां
दर्शं दर्शं सत्रपा राजहंसाः ।
तस्यावाप्त्यै वारिमध्ये वसन्तः
नित्यं यस्यां किं तपस्यां चरन्ति ॥ ८

क्रीडन्तीनां देववाराङ्गनानां
वक्षोजेभ्यश्चन्दनेषु च्युतेषु ।

पङ्क्तीभूतेष्वन्तरभः प्रपेदे
दिष्टचा तत्राप्यम्बुजैः पङ्कजत्वम् ॥ ९

यत्राऽधस्ताद्बिम्बितं चक्रमुर्व्याः
स्पष्टं दृष्ट्वा कर्मदेवास्तटस्थाः ।
इष्टं तप्तं दत्तमत्रेति हृष्टाः
स्थानं तत्राऽदर्शयन्त्यप्सरोभ्यः ॥ १०

उल्लङ्घ्याऽथ स्वर्धुनीगन्धवाहः
पाथोजानां सौरभैर्मांसलोऽपि ।
यस्याः सान्द्रैश्शीकरैश्शीतलस्सन्
भेजे शक्रानन्दनं नन्दनं सः ॥ ११

यत्रोद्याने यौगपद्येन हृष्टः
स्वं स्वं धात्रा क्लृप्तमुल्लङ्घ्य कालम् ।
तैस्तैर्भावैर्धामृतूनां समाजो
भूषं भूषं नित्यवासं तनोति ॥ १२

हृत्वा मुग्धाः प्रच्युतैर्भूरुहेभ्यः
साकं पुष्पैरन्तरिक्षादुडूनि ।
सूत्रस्यूतिं तेष्वनासाद्य हृद्ये-
ष्वादातुं नो नापि हातुं क्षमन्ते ॥ १३

नित्यं वृक्षा यत्र पुष्पैः फलैश्च
प्रीतिं यच्छन्तीति नैतद्विचित्रम् ।
चित्रं त्वेतच्छाखिनः केऽपि धन्याः
स्वैरं कामानर्थिनां पूरयन्ति ॥ १४

यस्याऽधस्ताद्भास्वतः सञ्चरिष्णो-
रूर्ध्वैरुस्रैस्तप्यमानास्सुधाशाः ।
छायावाप्त्यैर्भूरुहामूर्ध्वभागे
लब्धानन्दास्सञ्चरन्त्यप्सरोभिः ॥ १५

दृष्ट्वा सर्वं नन्दनं प्रस्थितस्य
व्याप्तां तुङ्गैर्गोपुरै ........
....................
.................... १६

क्रीडन्तः प्राक्कर्मणा स्वर्वधूभिः
यत्र प्राप्तान् भूसुराः प्रेक्ष्य वीरान् ।
दैवज्ञोऽहं वेद्मि भैषज्यमर्थी-
त्याशिःपूर्वं विक्लबा व्याहरन्ति ॥ १७

भानोः पादैरह्नि तप्तास्त्रिदश्यः
छायावाप्त्यै चन्द्रशालाः प्रपन्नाः ।

प्राप्ते सायं सेवितुं चन्द्रपादान्
नैवाधस्तान्नावरोहन्ति ताभ्यः ॥ १८

यस्यां दृष्ट्वा नूतनाः कर्मदेवाः
स्वर्गस्त्रीणां निर्निमेषेक्षणानि ।
पश्यन्त्येता हन्त ! रुष्टाः किमस्मा-
नित्यालोच्य द्वारि तिष्ठन्ति भीताः ॥ १९

गीर्वाणानां कल्पकक्ष्मारुहेषु
स्वैरं कामानन्वहं पूरयत्सु ।
क्रेतुं नव्यांस्तानविज्ञाय केचित्
मार्गं पृच्छन्त्याकुलाः पण्यवीथ्याः ॥ २०

यत्र प्राप्ताः कर्मदेवा विमानै-
र्वस्तुं हन्तानीक्षमाणाः स्थलानि ।
क्व स्थास्यामस्संचरामः क्ववेति
क्षिप्रं तेभ्यो नावरोहन्ति भीताः ॥ २१

दानस्रावश्यामगण्डाभिरामं
श्वेतोत्तुङ्गं वायुरैक्षिष्ट यस्याम् ।
नागाधीशं राजमानं चतुर्भी-
रक्षोवक्षःक्षोभदक्षैर्विषाणैः ॥ २२

स्वीयं यस्मिन् कौशलं विश्वकर्मा
प्रादुष्कुर्वन् नन्दयामास शक्रम् ।
नाऽलं यस्योत्तुङ्गतायै च विन्ध्यो
वीक्षाञ्चक्रे तं मरुद्वैजयन्तम् ॥ २३

धात्रा देवान् कुर्वता निर्निमेषा-
न्नाकारि क्ष्मा तत्र तत् साधु मन्ये ।
नो चेत् प्राप्ते दानवैः संप्रहारे
धूलीपाल्या विक्षतिः स्यात् तदक्ष्णाम् ॥ २४

देशः स्वर्गो यत्र पूः साऽमराव-
त्येते यस्यामद्भुताः कल्पकाख्याः ।
एतत् सर्वं सोऽपि वाचस्पतिर्वा
स्तोतुं नालं का कथा मादृशानाम् ॥ २५

इत्थं चित्रां तां पुरीमीक्षमाणः
प्राप्ते राजद्वारमारक्षकौघैः ।
कीर्णं कक्ष्यास्तूर्णमुल्लङ्घ्य तिस्र-
स्सुत्रामाणं वायुरैक्षिष्ट हृष्टः ॥ २६

अध्यासीनं काञ्चनं भद्रपीठं
लब्धाऽऽश्लेषं मूर्तया राजलक्ष्म्या ।

सोऽयं प्रह्वो बद्धमुग्धाञ्जलिस्सन्
इत्थं मन्दं मन्दमाचष्ट वाचम् ॥ २७

गत्वा स्वर्गं देवनेतुर्निदेशा-
दत्राऽऽनेया सा सुधर्मा त्वयेति ।
अदिष्टस्सन् माधवेनान्तिकं ते
प्राप्तः पश्चादत्र देवः प्रमाणम् ॥ २८

वाचं तामकर्ण्य लब्धप्रहर्षे-
णादिष्टोऽसौ मारुतो वासवेन ।
स्वीयं रूपं प्राप्य वेगात् सुधर्मा-
मादाय द्रागानिनायाऽथ भूमिम् ॥ २९

दृष्ट्वा नृणां तां तदानीयमानां
चित्ते तेषामेष तर्कस्तदाऽऽसीत् ।
किन्नु स्वर्गः किन्नु गन्धर्वलोकः
किं वा मेरुः पात्यते वायुनेति ॥ ३०

द्रागामूलोन्मूलितक्ष्मारुहौघं
वेगाघाताऽऽपातितग्रावकूटम् ।
स्त्यायद्घोषाऽऽपूर्णदिक्चक्रवालां
वायुर्भूमिं प्रापयत्तां सुधर्माम् ॥ ३१

स्वर्गे वातस्कन्धबन्धक्षमायां
यस्यां मुग्धस्तम्भपारम्परीया ।
आचारार्था केवलं सांप्रतं स्या-
ज्जाता भूमौ तत्समालम्बनार्था ॥ ३२

तेनानीतां वीक्ष्य धर्मात् सुधर्मां
सम्मन्वानौ शिल्पिनस्साधु शिल्पम् ।
सार्धं हृष्टावुग्रसेनेन राज्ञा
तामध्यासामासतुर्गोपवीरौ ॥ ३३

सर्वज्ञावप्यादृतं मर्त्यभावं
व्याचक्षाणौ जातुचिद्रामकृष्णौ ।
विद्यास्सर्वाः स्वाननाम्भोजभृङ्गी-
भावं नेतुं तावभूतां समुत्कौ ॥ ३४

ज्ञानाम्भोधिं देशिकं प्राप्तुकामौ
गत्वाऽवन्तीं तत्र सान्दीपनेस्तौ ।
प्राप्तावन्तेवासिभावं विनीतौ
हृष्टौ विद्याजातमन्वग्रहीष्टाम् ॥ ३५

विद्यास्सर्वा देशिकेनैकवारं
नीतास्तावत् कर्णयोर्गोचरत्वम् ।

स्थैर्यं प्रापन्नेतयोस्ता हि लोके
बुद्धाः लुब्धाः संपदस्सद्गुणेषु ॥ ३६

नानाविद्यावैखरीभिः प्रकामं
प्राप्तोच्छ्रायौ देशिकादप्यमुष्मात्
भूयो भूयः प्रह्वभावावलम्बा-
त्तस्याऽभूतां नाभ्यसूयापदं तौ ॥ ३७

यत्ते चित्ते वर्तते वाञ्छितं नौ
तत्सन्दिश्याचार्य ! कुर्याः प्रसादम् ।
इत्येवं तावभ्यधातां विनीतौ
दित्सू तस्मै दक्षिणां लब्धविद्यौ ॥ ३८

विज्ञायेत्थं तन्मतं मन्यमानो
विष्णोरंशावेष सान्दीपिनिस्तौ ।
सान्द्रानन्दोद्भेदरोमाञ्चिताङ्ग-
स्स्वीयं पुत्रं संस्थितं याचति स्म ॥ ३९

इत्थं तेनादिष्टमात्रौ तदेतत्
कृत्यं वीर्यान्मन्यमानौ सुसाधम् ।
तादृक् तस्याभीप्सितं कर्तुकामा-
वम्भोराशेस्तीरमासेदतुस्तौ ॥ ४०

वीक्ष्य प्राप्तावन्तिकं रामकृष्णा-
वाविष्कुर्वन् फेनदम्भात्प्रहर्षम् ।
अद्भिर्नूनं प्रोद्यतैर्वीचिहस्तै
रत्नस्तोमानानिनायोपदायै ॥ ४१

अब्धिं तुङ्गालोलकल्लोलमालं
राजत्पाण्डुस्त्यानफेनप्रपञ्चम् ।
स्फायद्घोषोद्वेजिताशाकरीन्द्रं
दृष्ट्वा कृष्णो राममित्थं जगाद ॥ ४२

ज्वालाजालैरौर्ववह्नेस्समन्ता-
त्प्राप्य क्वाथं वेपमानः प्रकामम् ।
सोढुं तादृग्वेदनामप्रगल्भो
वारं वारं वारिधिः क्रन्दतीव ॥ ४३

भूयो भूयस्सञ्चरद्वारिवाह-
स्फारस्फूर्जत्फेनताराभिरामः ।
काले काले पुष्पवद्बिम्बजुष्टः
सिन्धुर्व्योम्ना दृश्यते निर्विशेषः ॥ ४४

आगच्छन्तीर्मन्दमन्दं ह्रियेव
प्रीतो दूरादापगाः प्रेक्षमाणः ।

अम्भोराशिर्वीचिहस्तैस्समुत्को
धावं धावं गाढमालिङ्गतीव ॥ ४५

प्राप्तावावां काममभ्यागतावि-
त्याचक्षाणः स्वागतं गर्जितेन ।
अर्घ्यं पाद्यं चोद्यतैर्वीचिहस्तैः
पारावारस्सांप्रतं यच्छतीव ॥ ४६

शैलोदग्रैस्सञ्चरद्भिस्तरङ्गै-
र्भूयो भूयस्ताडिताः फेनखण्डाः ।
उत्पत्याब्धेर्विप्रकीर्णाः समन्ता-
त्सन्दृश्यन्ते व्योम्नि तारापदेशात् ॥ ४७

शङ्खस्तोमाः संप्ररूढप्रवाला-
स्त्यायद्वल्लीसङ्गताश्चन्द्रगौराः ।
पश्यैतस्मिन्नूर्मिवाताद्विषक्ताः
विभ्राजन्ते राजहंसा इवैते ॥ ४८

क्षोणीभृद्भिर्गर्जितैर्वीचिसङ्घै-
र्ग्राहैर्मीनैश्चाम्बुधिर्भीषणोऽपि ।
तैस्तैश्चेतोहारिभिर्वस्तुजातै-
र्भूयो भूयः प्रेक्षणीयो विभाति ॥ ४९

नानारत्नेष्वन्वहं तीरभूमिं
नीतेष्वेतैर्वीचिसङ्घैः क्रमेण ।
श्रेणीभूतेष्वम्बुराशेस्समन्ता-
देषा वेला भासते तन्मयीव ॥ ५०

मध्येतोयं बिम्बितो वारिराशौ
पश्य भ्राम्यन्भानुमाली विभाति ।
आसीनोऽसौ तुङ्गभङ्गप्लवेषु
प्लावं प्लावं क्रीडतीव प्रकामम् ॥ ५१

नाऽलं वेलामीक्षितुं यस्य तार्क्ष्यः
सोऽयं सिन्धुर्हन्त गाधेतरोऽपि ।
मर्त्यैर्नौभिस्साधनैस्तीर्यते य-
त्कृत्यं मन्ये तारतम्यानधीनम् ॥ ५२

शुक्तिष्वब्धेरङ्कितस्थं पयो य-
न्नाभूत्तादृक् योगतस्तद्घनानाम् ।
एतास्वेव प्राप्यते मौक्तिकत्वं
ज्ञेयं कैर्वा वस्तुसंयोगतत्वम् ॥ ५३

त्रस्ताः पक्षान् छिन्दतः पाकशत्रो-
र्लीनाश्शैला यस्य मैनाकमुख्याः ।

साकं ग्राहैरन्तरम्भश्चरन्तः
सन्दृश्यन्ते तैरमी निर्विशेषाः ॥ ५४

यस्याभोगं बोद्धुमीशोऽप्यनीशो
विन्ध्यो यस्याऽगाधतां सोऽयमब्धिः ।
नो मर्यादां लङ्घते जातु लोके
तेषामेषा पद्धतिर्ये महान्तः ॥ ५५

अब्धिं त्वष्ट्रा वर्तयित्रान्तराले
निक्षिप्तोऽसो चञ्चलोल्लोलहस्तैः ।
पश्यार्य त्वं फेनपुञ्जेन्दुबिम्बं
वारं वारं भ्राम्यमाणं विभाति ॥ ५६

अम्भोराशेस्तुङ्गभङ्गेषु विष्वक्
सङ्क्रान्तानां कैतवाद्भानुभासाम् ।
स्रस्ताः पाने पाथसामम्बुदेभ्यः
सौदामिन्यस्सञ्चरन्तीव यस्य ॥ ५७

अम्भोराशिं पश्यतामालवाल-
भ्रान्तिं दत्ते भूतलं भोगिसद्म ।
श्वभ्रप्रायं दृश्यते कर्कटस्य
व्योम स्वस्याभावमाविष्करोति ॥ ५८

सिन्धोस्तीरे विप्रकीर्णे वराट-
व्राते भङ्गैराहताः कर्कटौघाः ।
मन्दं मन्दं सञ्चरन्तो निषक्ताः
कुर्वन्त्येते यस्य सख्यादिवैते ॥ ५९

विष्वग्भ्राजत्फेनपुञ्जाम्बुवाहं
चारुस्त्यायन्मौक्तिकस्तोमतारम् ।
भास्वद्रोचिःस्वच्छशङ्खेन्दुबिम्बं
पश्योदन्वच्छारदं व्योम भाति ॥ ६०

पारावारं रंहसा संप्रपन्नाः
पाथोवाहाः सङ्ग्रहीतुं पयांसि ।
प्राप्ताभ्यासाः पश्य तस्माच्चिरेण
प्रायो गर्जन्त्यम्बरं गाहमानाः ॥ ६१

लब्धो यस्मात् संभवो लुम्पता तं
वह्निं प्रापि प्रागकीर्तिर्जलेन ।
पश्येदानीं पुष्णता बाडबं सा
दैवादम्भोराशिना पर्यमार्जि ॥ ६२

पश्यन्तौ तौ तानि तान्यद्भुतानि
स्मेरौ तास्ताः संल्लपन्तौ कथाश्च ।

पुत्रो यत्राऽभूद्गुरोस्संस्थितस्सः
क्षेत्रं पुण्यं प्रापतुस्तत्प्रभासम् ॥ ६३

ताभ्यां पुत्रो देशिकस्याम्बुराशिः
पृष्टः प्राप्तः प्रह्वभावस्समेत्य ।
दैत्यं तादृग्दुर्नयैकान्तभूमिं
स व्याचख्यौ तं जनं पञ्चपूर्वम् ॥ ६४

इत्थं प्रीत्यालापविज्ञापितौ तौ
निर्भिन्दन्तावस्त्रशक्त्या पयांसि ।
हत्वा दैत्यं तत्र तस्यास्थिजन्यं
वीर्योच्छ्रायि प्रापतुः पाञ्चजन्यम् ॥ ६५

उच्चैश्शङ्खं वादयन्तावभीक्ष्णं
प्राप्तौ प्रीतावन्तकस्यान्तिकं तौ ।
[1]सोऽपि प्रादात् तं कुमारं सजीवं
यं दत्वाऽऽस्तां देशिकेन्द्राय हृष्टौ ॥ ६६

अभिमतविषयोपलम्भहृष्टं
गुरुमभिपूज्य पुनः प्रणामपूर्वम् ।

---

1 मातृकायां पद्यमिदं सावशेषमेवोपलब्धम् । अत्र विषयविच्छेदो माभूदिति स्वयमुत्तरार्धपूरणं कृतम् ॥

द्रुततरमभिजग्मतुस्तदानी-
मथ मधुरापुरमृद्धसम्पदेनौ ॥ ६७

गङ्गाधरार्यजनुरार्यनृसिह्मराय-
स्यार्यत्रियम्बकविभोरपि योऽनुजन्मा ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ६८

॥ इति श्रीमहाकाव्ये भगवन्तरायस्य कृतौ मुकुन्दविलासे
सप्तमस्सर्गः ॥



## ॥ अष्टमः सर्गः ॥

नन्दगोपजनुषा कृतं बलात्
कंसमर्दनमवेत्य चारतः ।
अत्यमर्षकलुषाऽऽशयो जरा-
सन्ध इत्यभिदधे स्वमन्त्रिणः ॥ १

सम्प्रति प्रतिनिहत्य कैतवात्
कंसमूर्जितयशा यदूद्वहः ।

उग्रसेनमभिषिच्य तां पुरीं

पालयन्निवसतीति हि श्रुतम् ॥ २

अभ्युदीत इह नो जगद्द्विषां

कश्चिदङ्कुर इव द्विषत्तरोः ।

यावदेष न गतः प्रवृद्धतां

तावदस्य सुकरं विमूलनम् ॥ ३

गोपबालकममुं कृतानयं

नैव शास्म्यविगणय्य चेदहम् ।

हीनवीर्यममरा विभाव्य मा-

मापतेयुरिति यन्न तत्क्षमम् ॥ ४

रूढमूलगतिरल्पकोऽप्यरिः

शिक्षितुं न खलु भूभुजां क्षमः ।

व्याप्तमाशु परितो वपुर्विषं

न क्षमं हि भिषजां चिकित्सितुम् ॥ ५

हीनभावमवगम्य विद्विषो

नाञ्जसा तमभियाति यो नृपः ।

स प्रवृद्धनिजपक्षशालिना

तेन हन्त परिभूयतेतराम् ॥ ६

मर्दितस्वसुहृदं रिपुं न यः
शास्ति तस्य नृपतेरनीतिजम् ।
दुर्यशः प्रसरति क्षमातले
तैलबिन्दुरिव विष्वगम्भसि ॥ ७

मित्रमर्दनमहं विषह्य चे-
न्नैव हन्मि रिपुमुज्झितोद्यमः ।
भूभुजा नयवता सुहृज्जनाः
प्रोषिताः प्रतिकलं यथा यथा ॥ ८

तं भजन्ति समये तथा तथा
कर्षकं कलमसञ्चया इव ।
विद्विषा सुमहताप्यनिर्जितः
स्वल्पकादभिभवं न मृष्यति ॥ ९

तावदेव सुविनिग्रहे यथा
मज्जनिप्रसरणोन्मुखी गदा ।
खञ्जनः फणिभुवाप्यविप्लुतः
किं सहेत करटस्य दुर्नयम् ॥ १०

पूर्वमर्दितसुहृद्रिपुः प्रभो-
र्नापराध्यति स यावदुच्छ्रितः ।

स्वेष्वरेरसहमान उद्यमं
न्यक्क्रियां किमु सहेत तादृशीम् ॥ ११

स्पर्शमीषदनवाप्नुवन् बहिः
किं क्षमेत सहसा पदाहतिम् ।

.... .... .... ....
.... .... .... .... १२

सोऽपि पादनिहतिं खरद्युते-
र्मृष्यते न खलु पावकोपलः ।
न्यक्क्रियां यदि सहे रिपोरहं
धिक्कृतोऽपि लघिमानमाप्नुयाम् ॥ १३

सव्यलीकमिव मित्रमज्जनात्
सङ्कुचत्यपि जडं सरोरुहम् ।
द्रोहिणं [1]सुहृदवैरिणं कथं
मर्षयेऽहमधुना विदन्नपि ॥ १४

प्राप्य दुर्नयमरेः सुहृज्जने
यस्तनोति कियदित्युदासिकाम् ।

---

1 अकारान्त : 'सुहृद' इति च प्रयोगः साधुरेव - Vide: **VAMA Shivaraman Apte's Dictionary - Page 1691.**

तं भजन्ति न विभुं यथापुरं
हन्त विश्लथसमाधयः प्रजाः ॥ १५

अल्पके महति वा रिपौ नृपैः
कल्प्यमाहितनयं विमर्शनम् ।
कार्यमेव परमेनयोः पुन-
र्वर्ततां समुचितस्सुमुद्यमः ॥ १६

अल्पके द्विषि विधातुमक्षमो
भूभुजां समधिकं समुद्यमः ।
साधनं समुचितं विना सुधीः
कण्टकं परशुना किमुद्धरेत् ॥ १७

श्रीः सुहृज्जनमरक्षतः प्रभोः
स्वावनं बत कथं भवेदिति ।
शङ्कितेव चपला निसर्गतः
स्थैर्यमत्र भजते न जातुचित् ॥ १८

अस्तु तद्यदवधीत् सबान्धवं
हन्त तन्न विदितं मया तदा ।
मर्षये कथमिदन्तु सांप्रतं
यत्प्रशास्ति मधुरामरिस्स्वयम् ॥ १९

आहृताऽखिलसुरेन्द्रसंपदा
संहृतोन्मिषदरातिना मया ।
तस्य गोपजनुषः कृतागसो
नाऽधुना समुचितस्समाश्रयः ॥ २०

तप्तयोश्च समतामुपेतयो-
स्साधुसन्धिरिति मन्वते बुधाः ।
दुस्समाधिकलुषं विपर्ययं
प्राप्तयोरिह कथं घटेत सः ॥ २१

योऽपि "कश्चिदि"ति यद्युदास्महे
लब्धवृद्धिरिति[रति]दुस्सहो भवेत् ।
मित्रसङ्ग्रहपरस्ततोऽपि चेत्
वैद्यमप्रतिविधेयमापतेत् ॥ २२

यः प्रवीर इति कंसमर्दनात्
नेहते कमपि तुल्यमात्मना ।
तत्र विद्विषि निकामगर्विते
सामदानविधिरक्षमो हि नः ॥ २३

किञ्च साहसिनि दण्डमन्तरा
साधनत्रयमरौ बलाधिके ।

व्याहरन्त्यनुगुणं मनीषिण-
स्तस्य किं समुचितोऽयमर्भकः ॥ २४

इत्थमेव विमृशन्मुहुर्मुहु-
र्मर्दनं वरमरेर्विभावये ।
यूयमत्र नयतत्व कोविदाः
गौरवं वदत लाघवं तथा ॥ २५

कार्यमल्पमथवा महत्तरं
मन्त्रिभिस्सह विमृश्य यन्मुहुः ।
नानुतिष्ठति नृपः समुच्छ्रयं
प्राप्य कीर्तिपदमस्तु तत्कथम् ॥ २६

अत्युदग्रमदमीलितेक्षणं
सत्पथाऽभिमुखमेव भूपतिम् ।
व्यातनोति किल मन्त्रिसत्तमः
कुञ्जराधिपमिवाङ्कुशश्शितः ॥ २७

इत्युदीरितगिरं महीपतिं
नामतस्सुमतिरर्थतोऽपि च ।
सञ्जगाद स हि चाग्रनिर्मितं
देवदेशिक इवामरेश्वरम् ॥ २८

यत्त्वया नरपते समीरितं
युक्तमेव तव शौर्यसम्पदः ।
तत्र किञ्चिदभिधीयते मया
विप्रतिप्रमति मास्म मन्यथाः ॥ २९

यो विदन्नपि विचारतः पुमान्
भूभुजो नयविवर्जितां गिरम् ।
श्लाघते स नियतं मनीषिभिः
स्वामिघातक इति प्रणिन्द्यते ॥ ३०

विप्रतीपवचनैरमर्षितां
भूपतेरविगणय्य यः पुनः ।
नीतिमार्गमनुवर्तते सुधीः
श्लाघ्यते स सचिवो मनीषिभिः ॥ ३१

यन्न साधु तदमात्यदुर्नयात्
साधुयद्भवति तत् स्ववैभवात् ।
इत्थमेव निखिलं तदा तदा
कार्यतत्वमवगम्यते नृपैः ॥ ३२

नीतिदुष्टमिदमित्युदाहरे-
द्विप्रतीपमिति हन्त कुप्यति ।

प्राप्नुयादथ पुनस्तटस्थता-
मन्यथा खलु विशङ्कते नृपः ॥ ३३

एष कंसभगिनीतनूभवो
बन्धुरेव भवतोऽपि भूपते ।
तं वृथा रिपुतया विभावयन्
वैरमिच्छसि कथं बलीयसा ॥ ३४

पूतनाशकटधेनुकासुरान्-
यः प्रलम्बमविलम्बमोजसा ।
किञ्च दुष्टमवधीदरिष्टम-
प्येष बाल इति मन्यसे कथम् ॥ ३५

स्वं निहन्तुमविलम्बितच्छलं
कंसमुज्झितनयं यदूद्वहः ।
जीवनावनकृते कृतोद्यमः
सञ्जघान वद कोऽत्र दुर्नयः ॥ ३६

स प्रजाप्रणयसुस्थिरो मणि-
स्तप्तकाञ्चननियन्त्रितो यथा ।
अल्पको न नियतं दुरुद्धरो
न त्वया न जगतां त्रयेण वा ॥ ३७

बाल इत्यरिमुदग्रतेजसं
योऽसमीक्ष्य सहसाऽभिगच्छति ।
दीपपावकनिपातितात्मनः
प्राप्नुयात् स शलभस्य दुर्दशाम् ॥ ३८

कंसमात्मजनकावमानिनं
बान्धवद्विषममुं सुहृत्तया ।
त्वं विभाव्य हृदयङ्गमं सतां
मन्यसे कथमरिं मुरद्विषम् ॥ ३९

दुष्टतामुपगतस्सुहृत्परै-
राहतो वरमुपेक्षितुं बुधैः ।
अङ्गुलिर्विषविसर्पदूषिता
श्रेयसे हि भिषजा विखण्डिता ॥ ४०

एष कंसमवधीद्बलानुजः
सर्वथा न भवतः सुहृत्तया ।
तस्य कर्तुमहितं समुद्यतः
स्वावलेपफलमीदृगाप सः ॥ ४१

द्रोहमात्मजनके विधित्सुना
येन चेतसि धृता न विक्रिया ।

सैष घोरचरितः कथं पुन-
बन्धिवेषु बिभृयान्न दुष्टताम् ॥ ४२

कंसमेनमनये कृतास्पदं
द्रोहिणं पितरि बान्धवेषु च ।
यत्प्रसह्य मुरजिज्जघान तं-
त्तर्कये स तव मित्रमित्यहम् ॥ ४३

मित्रमीदृशमरिं विभावयन्
यः स्वयं तमभिगन्तुमीहते ।
सोऽवसीदति हतोद्यमस्तथा
पङ्कमग्नचरणः करी यथा ॥ ४४

लोककण्टकमनीतिभाजनं
कंसमाशु विनिहत्य तत्पदे ।
उग्रसेनमभिषिञ्चति स्म यः
सोऽयमुज्झितनयः कथञ्च न ॥ ४५

सद्भिरिच्छति विरोधमेव यः
सन्धिमन्वहमसद्भिरीहते ।
तस्य याति चपलत्वमिन्दिरा
तत्प्रजा अभिभवन्ति विश्लथाः ॥ ४६

यत्सुरासुरदुरासदौजसः
सर्वसम्मतगुणस्य शार्ङ्गिणः ।
संविधातुमुचितः समाश्रयः
का कथा तदिह सन्धिकर्मणि ॥ ४७

उग्रसेनतनये जगद्द्विषि
द्वैधमत्र न बभूव यत्पुरा ।
तत्कथं भवति सम्प्रतं जग-
न्मित्रतामुपगते मुरद्विषि ॥ ४८

दैन्यमत्र नवसामजं भवे-
द्दानजोऽपि न भविष्यति व्ययः ।
भेददण्डभययोः समुद्यम-
क्लेशयोस्सुहृदि सम्भवः कुतः ॥ ४९

यः प्रविश्य नगरीमवन्तिका-
मध्यगीष्ट सकलाः कला गुरोः ।
इच्छतस्तदनु दक्षिणां हरि-
स्तत्तनूभवमजीवयन्मृतम् ॥ ५०

यस्य सप्रणयमात्मनस्सदः
प्राभृतीकृतमभून्मरुत्वता ।

तत्प्रतीहितममानुषौजसं
नैव तेन कलहस्तव क्षमः ॥ ५१

इत्थं समीरितगिरे सचिवाय भूपः
क्रुद्धस्स मर्दनमरेर्वरमित्यमंस्त ।
आप्तेरितं हितमपि व्यपवृत्तदैव-
योगस्य चित्तमधिरोहति नात्मनीनम् ॥ ५२

॥ इति श्रीभगवन्तरायकृते महाकाव्ये मुकुन्दविलासे
अष्टमः सर्गः ॥



॥ नवमः सर्गः ॥

इति व्यवस्यन्मगधावनीपतिः
प्रचण्डकोपस्फुरिताधरस्तदा ।
आहूय सेनाधिकृतं बलानि नः
समाह्रियन्तामिति सन्दिदेश सः ॥ १

तथेति सेनापतिरुग्रतेजसा
तेनानुशिष्टो विजयाभिलाषिणा ।

बलानि सन्नाह्य विभुं न्यवेदयत्
कृतो निदेशोऽयमशून्य इत्यसौ ॥ २

सवारबाणासितशैवलाकुलं
धृतासिखेटव्रजमच्छकच्छपम् ।
सितातपत्रोज्ज्वलफेनसान्द्रितं
चलध्वजस्यन्दननौसमावृतम् ॥ ३

गजव्रजग्राहसमाश्रितान्तरं
महात्वङ्गत्तुरङ्गौघतरङ्गसङ्कुलम् ।
स्फुरन्प्रतापौर्वमपस्यदुद्भटं
बलार्णवं दुन्दुभिघोषगर्जितम् ॥ ४

घोटीखुरावट्टनविश्लथक्ष्मया
धूलीव्रजापीतसुरापगापया ।
भेरीध्वनिद्रावितदिक्करीन्द्रया
समुच्चचाल त्वरितं स सेनया ॥ ५

सान्द्रावमर्दादवनेस्समुत्थितं
रजो वितानत्वमवाप्तमम्बरे ।
निरुध्य विष्वक् तपनातपव्रजं
छायामिवायत्तबलस्य यास्यतः ॥ ६

क्षोणीमभिव्याप्य समन्ततस्तदा
भीमां प्रयान्तीं ध्वजिनीमवेक्ष्य ताम् ।
सृष्टिर्विधेरेव परेतनिश्चयं
जगाम लोको विमृशन्मुहुर्मुहुः ॥ ७

तदीयनिस्साणखावकर्णनै-
र्विलोलकल्लोलकदम्बकैतवात् ।
प्रकम्पमापन्नभयः प्रकाशयां-
बभूव गम्भीरतरोऽपि वारिधिः ॥ ८

वित्रस्तवाहारि कुलानि कानना-
न्युद्भ्रान्तहर्यक्षमृगाऽऽकुलानि च ।
तदा बभूवुर्मगधावनीपते-
र्जगत्त्रयव्यापिनि वाहिनीस्वने ॥ ९

स्वामिन्नु[तस्मिन्नु]दग्रध्वजिनीपयोनिधौ
दिशो दश व्याप्य तदाऽभिगच्छति ।
तज्जन्यजन्यं कुतुकंदिदृक्षवः
सुरा विमानैस्त्वरितं प्रतस्थिरे ॥ १०

नास्याः पुरःस्थातुमलं सुरासुराः
किन्नाम गोपास्त इमे हतौजसः ।

इति प्रकर्षन् महतीं तदा चमू-

ममंस्त हृष्टो मगधाऽवनीपतिः ॥ ११

नाशीरदेशप्रथमो हि योऽभवत्

सोऽभूत्परेद्युः शिबिरस्यपृष्ठतः ।

इति प्रकर्षन्महतीमनीकिनीं

दिनैस्स कैश्चिन्मधुरां समासदत् ॥ १२

अथ स्वचारैः प्रथमं यदूद्वह-

स्तदीयनिस्साणरवावकीर्णनैः ।

ततः परं सैनिकनिस्वनैरपि

क्षणेन जज्ञे युगपत्तदागमम् ॥ १३

बलं यदूनामखिलं पुराऽवने

विभज्य सन्नाह्य च यन्त्रसञ्चयम् ।

आतिष्ठ? सन्नद्धतया त्वमित्यसौ

तमुग्रसेनं सपदि न्ययूयुजत् ॥ १४

दुरासदं धाम विचिन्त्य वैष्णवं

समीक्ष्य सन्नाहममुष्य चामराः ।

मुरद्विषेऽसौ मगधेश्वरस्स्वयं

दातुं प्रपन्नो जयमित्यमंस्त ॥ १५

येनाऽवधीः कंसममुं त्वमोजसा
तद्दर्शयाद्यात्र पुरस्थितस्य मे ।
इतीरितस्सन् मगधावनीभुजा
समेत्य दूतो हरिमभ्यधादभीः ॥ १६

निशम्य तद्वाचिकमम्बुजेक्षणः
स्मितेन तन्वन् विदिशो[धवला]दिशो दश ।
कर्षन्यदूनां ध्वजिनी पयोनिधिं
रामेण सार्धं निरगात्पुराद्बहिः ॥ १७

मिथस्तदानीमुभयोरनीकयो-
रावद्धरोषोद्धतियुध्यमानयोः ।
हरिर्महीयान् मगधावनीपते-
र्व्यलोकि लोकैर्महसा न सेनया ॥ १८

अहर्निशं व्याप्तजगत्त्रये मुर-
द्विषः प्रतापे परिजाग्रति स्फुटम् ।
संभाव्य मार्ताण्डमतादृशद्युतिं
रजो रुरोधाऽशु बलावमर्दजम् ॥ १९

हृतेव लोके रजसा विसारणा
भेरीस्वनैश्चान्तरिते स्वनान्तरे ।

अभूद्ध्वजिन्या बलकृष्णकार्मुक-
ध्वनिर्महानात्मपरावबोधकः ॥ २०

सद्यस्समापद्य रजश्शनैश्शनैः
प्रतस्थिरे शोणितनिम्नगास्तदा ।
भृशानुरक्ताः पयसामधीश्वरं
प्रियं सलज्जा इव पङ्कजेक्षणाः ॥ २१

पीतासु धूलीष्वसृगापगाव्रजै-
र्लब्ध्वाऽवलोका मगधेशसैनिकाः ।
अमर्षदष्टोष्ठमुदञ्चितायुधा-
स्तदाभिपेतुर्यदुवीरवाहिनीम् ॥ २२

तामापतन्तीमवलोक्य भीषणा-
मभ्यद्रवद्यादववाहिनी द्रुतम् ।
मिथस्तदानीमुभयोरनीकयो-
रवर्ततायोधनमीदृशं महत् ॥ २३

सव्यापसव्यं भ्रमतां मुहुर्मुहु-
श्छिद्राणि चान्विष्यपरस्परं घ्नताम् ।
प्रचण्डकोपस्तिमितभ्रुवामभू-
दभूतपूर्वं रथिनां महन्मृधम् ॥ २४

प्रभग्नबाणासनकुन्ततोमरा
विचिन्तयन्तो गदिनो गदायुधाः ।
जघ्नुः प्रहारोद्यतहव्यवाहनं
व्याकृष्य दन्तानितरेतरं तदा ॥ २५

ममाधिनाथो जयतु प्रकाम-
मितीरयन्तो धृतखड्गखेटकाः ।
निवृत्य चाऽऽपत्य पुनः पुनर्मिथो
रोषादयुध्यन्त तुरङ्गसादिनः ॥ २६

वीरोऽसि चेत् प्राक् प्रहर त्वमागतो
हन्यामहं त्वामथ दृष्टविक्रमम् ।
इत्यालपन्तोऽनुपदं पदातय-
स्तदाऽभिपेतुस्तरसा परस्परम् ॥ २७

क्षये तनोः स्वस्तरुणीसमागमं
विपर्यये प्राप्नुत निस्तुलं यशः ।
तत्संप्रहारान्न विरम्यतामिति
क्षोणीस्थितानन्विशिषन् विमानिनः ॥ २८

तदुत्तमाङ्गं करयोरिदं द्वयं
कबन्धमेतच्चरणावमू मम ।

इत्याजिभूमिं परितो निजाङ्गका-
न्यदर्शयन्नप्सरसो विमानिनः ॥ २९

उन्मीलिताक्षं विवृताननं स्फुटी-
भवद्रदं कीर्णशिरोरुहावृतम् ।
मुण्डौर्ध्वमालोक्य भयङ्करं शिवाः
घ्रातुं वत द्रागभवन्ननीश्वराः ॥ ३०

श्येना रणक्ष्मामधिगम्य विक्षतै-
र्योधाङ्गकैः सङ्कुलितां समन्ततः ।
चञ्चूविकृष्टामिषखण्डगद्गद-
स्वरं मुहुः स्वास्तरुणीस्समाह्वयन् ॥ ३१

इति प्रहर्त्रोरुभयोरनीकयोः
श्लथोद्यमा यादववीरवाहिनी ।
वेगं जरासन्धबलस्य दुस्सहं
विभावयन्ती शनकैरपाद्रवत् ॥ ३२

दृष्ट्वा द्रवन्तीं चतुरङ्गिणीं निजा-
न्यासाद्य चास्त्राणि सहाग्रजन्मना ।
विशन्ममन्थ द्विषतां बलं हरि-
र्निधिं जलानामिव मन्दराचलः ॥ ३३

मुरद्विषस्तस्य तदा पतत्रिणा-
मादानसन्धानविमोक्षणक्रमः ।
नादृश्यतादृश्यत किन्तु संस्थितो
रिपुर्विमाने सुरसुभ्रुवा युतः ॥ ३४

व्यापाद्यमानं मुरवैरिणा निजं
बलं बली वीक्ष्य स मागधेश्वरः ।
त्वं प्राकृतैर्वीर नयोद्धुमर्हसी-
त्युदीरयन् वैरिणमभ्ययाद्द्रुतम् ॥ ३५

तमापतन्तं रथिनं रथी तदा
सक्रोधमभ्यापतदम्बुजेक्षणः ।
मुक्ताङ्कुशाघातभयं मदोद्धतं
विधुर्मृगाणामिव वन्यवारणम् ॥ ३६

तयोश्शराऽऽच्छादितभानुबिम्बयो-
रस्त्रौजसा स्तम्भितसर्वलोकयोः ।
अभूद्यदायोधनमुद्धतं चिरा-
ददृष्टपूर्वं ददृशे सुरासुरैः ॥ ३७

अथाब्जनेत्रेण हताश्वसारथिः
ध्वंजातपत्राक्षरथाङ्गकूबरः ।

तदा गदापाणिरभूदवस्थितो
धीरो धरण्यां मगधावनीपतिः ॥ ३८

करादृतं तेन विलोक्य जिष्णुना
चक्रं निसर्गद्युतिभास्वरं निजम् ।
अमोघतां तस्य विभावयन्नसून्
रिरक्षिषुस्सोऽयमपाद्रवद्द्रुतम् ॥ ३९

अन्यं समारुह्य रथं तदा जरा-
सन्धस्तमभ्यद्रवदुद्यतायुधः ।
मर्मस्वनेन प्रहृतः शरोत्तमैः
हताश्वसूतः पुनरप्यमाद्रवत् ॥ ४०

इत्थं जितोऽष्टादशकृत्व ऊर्जितो-
प्यसावनीशः पुरतोऽस्य वर्तितुम् ।
स्मरन्मुहुस्तत्सचिवेरितं वचः
पलायत स्वां मगधाधिपः पुरीम् ॥ ४१

स्वपाञ्चजन्यस्य स वादनच्छलात्
गाढं समाश्लिष्य रणे यशःश्रियम् ।
चुम्बन्निवाम्भोरुहलोचनः पुन-
र्हृष्टस्सरामो मधुरामवीविशत् ॥ ४२

सगर्भमानैर्यदुभिर्विमानितो-

ऽजानंस्तदुच्छेदगतिं स मागधः ।

संप्राप्य कालं यावनोत्तरं पुनः

सखायमह्नीरकरोदथोद्यमम् ॥ ४३

तथाविधं तस्य रिपोस्समुद्यमं

विभावयन् यादववीरदुस्सहम् ।

भयं न कस्मादपि यत्र सर्वथा

स तादृशं स्थानमयाचताम्बुधिम् ॥ ४४

स्थाने वितीर्णेऽभिमते पयोधिना

स द्वारकाख्यामरिदुस्सहां पुरीम् ।

निर्माय तस्यां च निवेश्य यादवा-

न्पुनर्मुरारिर्मधुरापुरीमगात् ॥ ४५

पुरीं निरुद्धां यवनेन सेनया

विहाय तामाशु पलायनच्छलात् ।

विनिर्गतस्सोऽयमनुद्रुतोऽमुना

विवेश घोरां मुरजित्तदा गुहाम् ॥ ४६

तस्मिन्निविष्टेऽनुविशन् हरिभ्रमात्

द्वारि प्रसुप्तं मुचुकुन्दमङ्घ्रिणा ।

निघ्नन् स तत्क्रोधकृशानुहेतिभि-
स्तूर्णं समानीयत शालभीं दशाम् ४७

ततो मुकुन्दो मुचुकुन्दवन्दित-
स्तस्मै वितीर्णोत्तमशाश्वतस्थितिः ।
बिलाद्विनिर्गत्य समृद्धसंपदं
स द्वारकां हृष्टमनाः समाययौ ॥ ४८

सर्वप्रयत्नेन हतोद्यमो जरा-
सन्धो विषण्णस्सुतरां मुरद्विषम् ।
सुरासुरैरप्यविषह्यविक्रमं
विभावयन्नात्मपुरीमथासदत् ॥ ४९

स्वज्ञातिसन्दर्शनलालसश्चिरं
रामः प्रपन्नोऽथ स नन्दगोकुलम् ।
आश्वास्य गोपीर्मुरजिद्वियोगतः
स्वबान्धवैःसाकमरीरमद् भृशम् ॥ ५०

शेषस्य साक्षादमुमंशमूर्जितं
विभाव्य रामं वरुणेन वारुणी ।
तत्प्रीतिहेतोः प्रहिता सती तदा
प्रादुर्बभूवाऽशु कदम्बकानने ॥ ५१

सौरभ्यपूराहृतषट्पदव्रजां
हृद्यामनवद्यां मदिराझरीं बलः ।
अन्वग्रहीद्वल्लवपल्लवाधरा-
ऽमृतेन सार्धं मुदितो मुहुर्मुहुः ॥ ५२

अथ व्रजाम्भोरुहलोचनास्सुरां
हलायुधः पाययति स्म तास्तदा ।
नेत्राननन्यक्कृतकिंशुकश्रियो
मुक्तव्यवस्था विविधं व्यजह्रिरे ॥ ५३

परिष्कृतां तामनुरूपवस्तुभिः
पीत्वा सुरां भूरिबलेन पायिताम् ।
भ्रामन्ति गायन्ति नटन्ति सुभ्रुवः
क्रन्दन्ति मुह्यन्ति हसन्ति च स्म ताः ॥ ५४

सुरां पिबन्त्यश्चषकेषु बिम्बिता-
न्यालोक्य काश्चित् वदनानि सुभ्रुवः ।
तेष्वादधानास्सरसीरुहभ्रमं
ग्रहीतुमीषुः श्रुतिभूषणाशया ॥ ५५

काश्चिज्जजल्पुः शिथिलाक्षरं मुहुः
काश्चिद्विचेरुस्स्खलिताङ्घ्रिवारिजम् ।

काश्चिद्विमुक्तश्रुति शिश्यिरे मिथो
व्यलम्बयन् काश्चिदवाप्तविक्रियम् ॥ ५६

हृ.... लेष्वनुरागभूरुहा-
मब्जेक्षणाभिर्विहिता नवाङ्कुराः ।
सिक्तास्सुराभिः समदर्शयन्मुहु-
र्विलोलशोणाक्षिमिषेण पल्लवान् ॥ ५७

सुरां निपीय व्रजपङ्कजेक्षणा
निरस्तयावद्रवदन्तवाससः ।
गृहीतरागाननलोचनाम्बुजाः
परां तदानीमभजन्त निर्वृतिम् ॥ ५८

अथाऽनिलं मल्लिशिरीषपाटलं
प्रसूनसौरभ्यझरीपरिष्कृतम् ।
रामस्समाघ्राय विहर्तुमम्भसि
व्रजाङ्गनाभिस्सममिच्छति स्म सः ॥ ५९

तत्रासमीक्ष्यानुगुणं जलाशयं
कलिन्दकन्यां सविधे समाह्वयत् ।
अनागतां तामवमानरोषितां
क्रुद्धो हलेन प्रसभं चकर्ष सः ॥ ६०

व्याकृष्यमाणा बलिना बलेन सा
साक्षात्प्रपन्ना चकिता कलिन्दजा
रामं विनीता प्रणिपत्य सादरं
तस्याऽभिलाषं निरवर्तयत्तदा ॥ ६१

कलिन्दजामात्मवशे विधाय सः
व्रजाङ्गनाभिर्विहरन् तदाऽम्भसि ।
अगान्मरालस्सुतरां मुदं बल-
स्तोषं मरालीभिरिवावृतश्चिरम् ॥ ६२

चलन्मणीकङ्कणमञ्जुशिञ्जितै-
रापूरिताऽऽशामुखरन्मुखास्तदा ।
मिथस्सलीलं सलिलानि चिक्षिपु-
र्मुहुर्मुहुर्वल्लवपल्लवाधराः ॥ ६३

स्त्रीणां कुचप्रच्युतचन्दनैर्जलं
यद्यामुनं प्रागभवत् सितप्रभम् ।
तल्लोचनाम्भोरुहविच्युताञ्जनैः
पुनस्तदानीं ददृशे यथास्थितम् ॥ ६४

क्लिन्नांशुकासु व्रजपङ्कजेक्षणा-
स्वङ्गानि तासां विशदानि सादरम् ।

पश्यन्निगूढस्मितमण्डलो हला-
युधस्ततस्तास्सुतरामलज्जयत् ॥ ६५

प्रियेण वासस्सु हृतेषु लीलया
निषेदुषीणां भृशमाहितत्रपम् ।
पयो यदूरुद्वयसं मृगीदृशां
तदेव कण्ठद्वयसं ततोऽभवत् ॥ ६६

स्वान् गोपकान्तांनयनाब्जतोऽधिकान्
विभावयन्तस्सहसा समुत्थिताः ।
अप्राप्य तैस्साम्यमथाश्रितत्रपं
मीनाः पुनर्द्रागपतन्निवाम्भसि ॥ ६७

निरस्तपङ्केरुहसौरभेष्वमी
भृङ्गाः पतन्तो वदनेषु सुभ्रुवाम् ।
अन्याऽलिभीतिं कुटिलालकव्रजे-
ष्विवादधानाः शनकैरपासृपन् ॥ ६८

मुग्धाम्बुजाक्षीषु चिराय कासुचित्
भयादनीशासु विहर्तुमम्भसि ।
स्थिताः प्रतीरेषु करान् विधून्वती-
स्ताः प्लावयामास हलायुधस्स्वयम् ॥ ६९

स्वबाहुहारादृतकान्तकण्ठया
कयाचिदाश्लिष्टवपुर्हलायुधः ।
करेण तत्पीनकुचौ परामृशन्
नदीं तरीतुं कलशाविवाश्रयत् ॥ ७०

इत्थं वारिविहारनिर्वृतमनाः प्राप्तद्युतिः कुण्डली
म्लानाम्भोरुहदामनीलवसनो नीलोपलैर्मञ्जुलैः ।
दत्तैरिन्दिरया विभूषितवपुस्संप्राप्य स द्वारकां
रामो रैवतकेऽस्य तामुदवहत्कन्यां
शुभां रेवतीम् ॥ ७१

गङ्गाधरार्यजनुरार्यनृसिह्मराय-
स्यार्यात्रियम्बकविभोरपि योऽनुजन्मा ।
काव्येऽमुना विरचिते भगवन्तनाम्ना
सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ७२

॥ इति श्रीमुकुन्दविलासे महाकाव्ये भगवन्तरायस्य कृतिषु
नवमःस्सर्गः ॥



## ॥ दशमः सर्गः ॥

अथ कैशिकनाथस्य तनयां रुक्मिणीं हरिः ।
चकमे रूपसम्पन्नां सा च तं गुणवत्तरम् ॥ १

याचितस्तेन वैदर्भस्तमनर्हं विभावयन् ।
अभाग्य इव संप्राप्तं भाग्यं प्रत्यक्षिपन्महत् ॥ २

शिशुपालाय तां कन्यामयाचन्मगधाधिपः ।
भीष्मकोऽप्यध्यवास्यत्तन्मुदितो वैरगौरवात् ॥ ३

श्रुत्वा तमुद्यमं तेषां नारदान्नीरजेक्षणः ।
जिघृक्षू रुक्मिणीमेष विदर्भनगरीमगात् ॥ ४

स्थितः पुराद्बहिस्तत्र शच्याराधनहेतुना ।
प्राप्तां तामहरत्कन्यां हरिस्साक्षादिव श्रियम् ॥ ५

हृतायां स्वसरि स्वस्यां रुक्मिणाऽनुद्रुतस्तु तम् ।
जित्वा तया पुरात्तस्मात् निर्ययौ विजयश्रिया ॥ ६

अथोग्रसेनो रुक्मिण्या युक्तं मेने जनार्दनम् ।
नियत्या हितसाचिव्यं मनोरथमिवागतम् ॥ ७

वैवाहिकं स सन्नाहमन्यादृशमरीरचत् ।
तिरश्चकार येनास्य पुरी शातमुखीं पुरीम् ॥ ८

उत्सुकैरुत्सवो दृष्टः सा सभा राजभिर्वृता ।
वृतयाऽखिलदिक्पालैरस्पर्धत सुधर्मया ॥ ९

अथाऽरोप्य समं वध्वा करिण्यां कमलेक्षणम् ।
उग्रोऽपि वसुदेवेन राजमार्गमगाहत ॥ १०

अध्यास्य करिणीं प्रीतः प्रियया पङ्कजेक्षणः ।
रराज दिवमारूढो रोहिण्येव निशाकरः ॥ ११

विवाहनैपथ्यभृतं प्रतोलीं प्रस्थितं हरिम् ।
तन्माङ्गलिकमातोद्यं भुवनेभ्य इवाऽवदत् ॥ १२

अथ विश्वम्भरास्वर्गबलिसद्मौकसस्तदा ।
अभवन्नङ्गनाःसर्वाः द्रष्टुमुत्सवमुत्सुकाः ॥ १३

प्रासादान्मर्त्यवनिता विमानान्यमराङ्गनाः ।
नागान्नाग्यस्समारुह्य ददृशुस्तौ वधूवरौ ॥ १४

अदृष्टपूर्वं तद्द्वन्द्वं पश्यन्त्यस्सुरसुभ्रुवः ।
अमंस्त चाऽनिमेषत्वं सफलं साम्प्रतं निजम् ॥ १५

मुहुर्मुहुस्स्तुवन्त्यस्तन्मिथुनं नागसुभ्रुवः ।
वितीर्णरसनायुग्मं विधिं चेतसि तुष्टुवुः ॥ १६

सादरं मर्त्यसुदृशो दर्शं दर्शं वधूवरौ ।
अनिमेषाक्षियुगलमन्वकुर्वन्सुराङ्गनाः ॥ १७

रुक्मिण्या योजयन् कृष्णं तां च तेन स्तवास्पदम् ।
विधिरासीज्जगत्यां हि श्लाघ्ययुक्तविधानतः ॥ १८

अथाऽविशन्निजागारद्वारं माङ्गलिकैर्घटैः ।
जुष्टं करेणोश्शनकैरवतीर्याम्बुजेक्षणः ॥ १९

मङ्गलालङ्कृतां रम्यां हरिः कौतुकवेदिकाम् ।
अवाप सुदृशा सार्धं प्रियः प्रीत्या प्रियामिव ॥ २०

स वह्निसाक्षिकं तस्याः पाणिं जग्राह पाणिना ।
आम्रद्रुरतिमुक्तायाः पल्लवेनेव पल्लवम् ॥ २१

सा प्रियेण समादिष्टा विदर्भाधिपतेस्सुता ।
जुहाव ज्वलने लाजान् लज्जाविनमितानना ॥ २२

हुतं तया स वीतार्चिर्हविर्जग्राह पावकः ।
शान्ताकृतिरिवातिथ्यमतिथिर्विधिनान्वितम् ॥ २३

लज्जासङ्कुचिताङ्गायाः प्रियायाः पादपङ्कजम् ।
अश्मन्यारोपयामास स्थैर्यमापादयन् हरिः ॥ २४

इत्थं निर्वर्त्य विधिवद्विधिज्ञः पाणिपीडनम् ।
रममाणस्तया सार्धं निर्वृतोऽभूच्चिरं हरिः ॥ २५

निर्वृता सा च सुश्रोणी रुक्मिणी रुक्मभूषिता ।
प्रद्युम्नादीन्सुतानष्टावसूताऽऽशागजानिव ॥ २६

अरीरमदसावष्टौ सत्यभामादिकाः स्त्रियः ।
अन्याष्षोश्शसाहस्रीश्चोपयम्याम्बुजेक्षणः ॥ २७

प्रार्थितो जिष्णुना कृष्णः प्रतस्थे सत्यभामया ।
सताक्ष्यों नरकात्त्रातुं भुवनं नरकादिव ॥ २८

पुरं प्राग्ज्योतिषं प्राप्य निहताराातिसैनिकः ।
चक्रेण नरकं चक्रे चक्रं चक्रधरो भुवः ॥ २९

अभयं याचितस्तस्य सन्तत्यै धरया हरिः ।
दत्वा तद् दातुं आपद् द्यां अदितेरथ कुण्डले ॥ ३०

शक्रेण पूजिते कृष्णे शची सत्यामपूजयत् ।
न तस्यै पारिजातस्य प्रसूनं मानुषीत्यदात् ॥ ३१

शच्यवज्ञाकुपितया प्रेरितस्सत्यभामया ।
ध्मन्त्याऽग्निरिव ध्मातस्तेजसा ववृधे हरिः ॥ ३२

प्रविश्य नन्दनं शच्याः नन्दनं नन्दनन्दनः ।
मन्दराचलधीरस्तं मन्दारमहरद्द्रुमम् ॥ ३३

ततोऽभियातो हरिणा पारिजाताहरो हरिः ।
विनिर्जित्य पुनस्तस्मै प्रह्वः प्रादादनोकहम् ॥ ३४

पुनरप्यर्पितं साम्ना शक्रेण मुरजिद्द्रुमम् ।
आदाय हर्षयन्सत्यामाविशद्द्वारकां पुरीम् ॥ ३५

उषया छद्मना पौत्रो हारितस्सत्यभामया ।
बाणेन पाशैर्बद्धश्चेत्यश्रौषीन्नारदाद्धरिः ॥ ३६

उपलभ्य ततः पौत्रप्रवृत्तिं कुपितो भृशम् ।
बाणाय पञ्चबाणाय हरिर्हर इवाऽभवत् ॥ ३७

वधाय प्रस्थितश्शत्रोस्तस्याऽवनकृतं युधि ।
संप्राप्तं प्रमथैस्साधं जिगाय वृषभध्वजम् ॥ ३८

क्रोधाज्यपूरितः कृष्णकृष्णवर्त्मा व्यनीनशत् ।
प्रचण्डबाणदोर्दण्डखाण्डवारण्यमोजसा ॥ ३९

स्फुरच्चक्रस्ततश्शत्रोश्शिरच्छेत्तुं समुद्यतः ।
याचितश्शम्भुना साम्ना तं मुमोचानुकम्पया ॥ ४०

विमुच्य पाशबन्धात्तमनिरुद्धं सहोषया ।
द्वारकामाजगामाऽसौ नेता नीत्येव विक्रमम् ॥ ४१

स्पर्धमानं ततस्तेन पौण्ड्रकं रूपलक्षणैः ।
निन्ये स तत्पुरीं गत्वा चक्राग्नौ शालभीं दशाम् ॥ ४२

अथ मित्रवधक्रुद्धे प्राप्ते काशीपतौ हरिः ।
छित्वा चक्रेण मूर्धानं द्रुतं तस्याक्षिपत्पुरे ॥ ४३

पुत्रो जनकशीर्षं तज्जन्यशीर्ष्णि मुरारिणा ।
दृष्ट्वारिभीषणां मायामयाचत्तपसा हरम् ॥ ४४

माययोत्थामथाक्लिष्टामालोक्य द्वारकौकसा
प्रेरितं तेन चक्रं तामदहत्तं च काशिपम् ॥ ४५

जित्वा च वैरिणां बृन्दमविशद्द्वारकां हरिः ।
निहत्य करिणां कूटं गुहामिव मृगाधिपः ॥ ४६

जातोऽथ जाम्बवत्पुत्र्यां जाम्बवत्यां जनार्दनात् ।
साम्बो दुर्योधनसुतां मूर्तिमत्तां मुदाऽहरत् ॥ ४७

संवृतं कौरवैः कन्याहारिणं साम्बमोजसा ।
प्राप मोचयितुं साम्ना मुसली हस्तिनापुरम् ॥ ४८

न्यक्कृतः कौरवैर्मत्तैरननुष्ठितवाञ्छितः ।
चुक्रोध रामस्सुतरां पादाहत इवोरगः ॥ ४९

चकर्ष नगरं तस्य हलेन स हलायुधः ।
हनूमानिव वालेन शृङ्गं द्रोणगिरेरिव ॥ ५०

लाङ्गलेन बलात्कृष्टा साट्टप्राकारतोरणा ।
हस्तिनानगरी क्रोधं सेहे न हलिनस्तदा ॥ ५१

ततस्तत्कर्मणा सर्वे सातङ्काः कुरवो भृशम् ।
सप्रणाममयुञ्चन्त सजानिं साम्बमञ्जसा ॥ ५२

विवेश द्वारकाद्वारं समं साम्बेन लाङ्गली ।
अनुरागेण संपृक्तः प्रियमान इव प्रियः ? ॥ ५३

हरिर्वंध्रूकुमाराभ्यां प्राप्तं राममममन्यत ।
निजकीर्तिप्रतापाभ्यां मूर्तिमद्भ्यामिवावृतम् ॥ ५४

अथ रामं वने स्त्रीभिः क्रीडन्तं द्विविदः कपिः ।
वियोजयन्निवात्मानमसुभिर्द्रागदुद्रवत् ॥ ५५

रामोत्तमाङ्गे कपिना पातितो धरणीधरः ।
लघूपल इवोदग्रग्राव्णि सञ्चूर्णितोऽभवत् ॥ ५६

अथाऽपतन्तं प्लवगं मुष्टिना विनिहत्य च ।
त्वरितं योजयामास स्वर्वंध्रूभिर्हलायुधः ॥ ५७

इत्थं विश्वम्भभराभारमुद्धृत्य बलकेशवौ ।
श्रीयुतां द्वारकां द्विड्भिरानयेतामनेहसाम् ॥ ५८

अथ संप्रार्थितो जातु मुरारिर्वृत्रविद्विषा ।
वैकुण्ठं गन्तुमुत्कण्ठामकरोत् श्रीसमाहितः ॥ ५९

स यदूनां कुलं सर्वमुपसंहृत्य कैतवात् ।
प्रापय्य प्रकृतिं रामः स्वरूपं स्वयमाददे ॥ ३०

चतुर्भुजःश्रियाऽऽश्लिष्टः शार्ङ्गी कौस्तुभमण्डनः ।
चक्री पीताम्बरो विष्णुर्विमाने प्रत्यदृश्यत ॥ ६१

चित्राणि यानि यान्युर्व्यां कर्माणि चक्रिरे स्वयम् ।
स्थितो विमाने मानार्हां कमलां तान्यदर्शयत् ॥ ६२

पश्यैतज्जाह्नवीतीरे युधिष्ठिरपुरं महत् ।
यत्र प्रसह्याभिहतः शिशुपालो मया पुरा ॥ ६३

अत्र चक्रुः कुरुक्षेत्रे युद्धं कौरवपाण्डवाः ।
मदधीनौ तदा तेषामास्तां जयपराजयौ ॥ ६४

पुरी सेयं समुत्तुङ्गवप्रगोपुरतोरणा ।
साल्वः खल्वसुरो यस्या नेता निन्ये यमक्षयम् ॥ ६५

दवीयानप्यहं भक्त्या स्मृतस्सकृदरक्षिषम् ।
कृष्णां दुर्योधनत्रस्तां तदिदं हास्तिनं पुरम् ॥ ६६

पुरी सेयं जरासन्धो यत्र भीमेन घातितः ।
न चकास्ति विना तेन व्याघ्रेणेवाद्रिकन्दरा ॥ ६७

अस्त्रं पाशुपतं शम्भोः पार्थेन ग्राहितं मया ।
प्रिये सोऽयं गिरिश्रेष्ठः कैलासं पश्य राजते ॥ ६८

इत्थमन्यान्यपि स्वीयान्यासन् कर्माणि यान्यसौ ।
प्रियायै दर्शयन्नेवं निजमध्यासदत्पदम् ॥ ६९

ततस्स पुण्डरीकाक्षः सङ्गतैर्मुदितात्मभिः ।
कृतप्रणामैरखिलैरित्थं अस्तूयतामरैः ॥ ७०

ब्रह्मात्मना सृजसि यो जगदेतदादौ
विश्वम्भरत्वमधिगम्य ततो बिभर्षि ।

पश्चात्स्वयं हरसि हन्त ! हरात्मना त्वं
तस्मै नमो भगवते त्रिविधात्मकाय ॥ ७१

संसारपङ्कपरिलिप्तसमस्तदेहैः
त्र्यन्तवारिधिविगाहनशुद्धभावैः ।
यो मृग्यसे नियमितात्मभिरात्मरूप-
स्तस्मै पुराणपुरुषाय नमः परस्मै ॥ ७२

याऽखर्वगर्वपतनोच्चलदुच्चवीचिः
नीता लयं निजजटाकुहरैकदेशे ।
सा येन पावितजला प्रपदेन मुक्ता
चित्ते स नो हरिहराकृतिरस्तु नित्यम् ॥ ७३

तैस्तैरुपप्लवशतैः परिपीड्यमानं
येन प्रकृष्टकरुणेन तदा तदाऽत्र ।
विश्वं समुद्धृतमभूद्दशधाऽवतीर्य
नित्यं स नोऽस्तु शरणं पुरुषः पुराणः ॥ ७४

यस्तापयत्यनिशमात्मदृशाऽवलोकै-
राह्लादयत्यपि पुनर्भवनं समस्तम् ।
स्वैरं स नो विदधतां [वितनुतात्] हृदये निवासं
सूर्येन्दुचारुनयनो भगवान् मुरारिः ॥ ७५

क्षणोऽपि कीर्तिधवलः परिपूतमूर्तिः

जारोऽपि सङ्गरहितोऽपि सहस्रदारः ।

लक्ष्मीधरोऽपि [1]विहितो दधिदुग्धचोरः

तन्निर्गुणं सगुणमप्यनिशं भजामः ॥ ७६

इति नुतिभिरमन्दानन्दसन्दोहसिन्धु-

प्रचलदमलवीचीशीकरासारसिक्तः ।

दरमुकुलितनेत्रो नीरजाक्षः कटाक्षैः

स्ववसतिमधिगन्तुं निर्जरानादिदेश ॥ ७७

गङ्गाधराध्वरिसुतो नरसिंह्मसूरे-

र्यस्त्र्यम्बकाध्वरिमणेश्च सुधी कनीयान् ।

काव्येऽमुना विरचिते भगवन्तनाम्ना

सर्गश्शुभोऽजनि मुकुन्दविलासनाम्नि ॥ ७८

॥ इति श्रीमुकुन्दविलासे दशमस्सर्गः ॥



1 च हितो ।

# வேண்டுகோள்

கருணையுள்ளங்கொண்ட நம் முன்னோர்கள், அரிய பெரிய இலக்கியங்களையும், பிறவற்றையும், பனையோலைகளில் எழுதிச் சுவடிகளாக நமக்குத் தந்தனர், அவை, பல்வேறு இடங்களில் முடங்கி உள்ளன. சுவடிகள் பழுதடைவதற்குமுன் சரசுவதி மகாலுக்கு அன்பளிப்பாகக் கொடுத்துதவினால், அவை மக்களுக்குப் பயன்படும்,

மகாலுக்குக் கொடுப்பதன் மூலம், சுவடி தந்தவர் களும், சுவடி எழுதியோரும் அழியாப் புகழை, பெருமைசால் சரசுவதி மகால் உள்ளளவும் பெறுவர். அவை பதிப்பாகி வருமாயின் சுவடி தந்தார் பெயர் இடம் பெறுவதோடு, அப்பதிப்பில் ஐந்து பிரதிகளும் பெறுவர்.

எனவே, ''நாம் பெற்ற பேறு பெறுக இவ் வையகம்'' என்ற எண்ணமுடைய நற்பண்பாளர்கள் தம்மிடமுள்ள சுவடிகளைச் சரசுவதி மகாலுக்குத் தந்துதவ வேண்டுகிறேன்,

தஞ்சாவூர்
28-12-95

மாவட்ட ஆட்சியர் மற்றும் இயக்குநர்,
சரசுவதி மகால் நூலகம்

## ॥ शुद्धिपत्रिका ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधितम् |
|---|---|---|---|
| 4 | 11 | पति | पीत |
| 8 | 12 | ध्नतां | घ्नतां |
| 12 | 10 | धनाधन | घनाघन |
| 15 | 11 | विर्दलितः | विदलितः |
| 30 | 1 | स प्रणामं | सप्रणामं |
| 31 | 12 | अनुवर्नं | अनुवनं |
| 43 | 10 | तत्पालिकश्लथ | तत्पालिकाश्लथ |
| 47 | 3 | पयोधि मग्न | पयोधिमग्न |
| 61 | 11 | ननुविरह | ननु विरह |
| 63 | 7 | तेभ्धः | तेभ्यः |
| 64 | 14 | क्षखं | क्षणं |
| 74 | 2 | नैर्धृण्यात् | नैर्घृण्यात् |
| 89 | 18 | विलोकिनाः | विलोकिनः |
| 97 | 14 | रक्षकाघैः | रक्षकौघैः । |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधितम् |
|---|---|---|---|
| 113 | 5 | तत्व कोविदाः | तत्वकोविदाः |
| 114 | 14 | साधुयद्भवति | साधु यद्भवति |
| 115 | 11 | विलम्भित | विलम्बित |
| 118 | 9 | नव | तव |
| 118 | 14 | अध्यगीष्ट | अध्यगीष्ठ |
| 120 | 4 | मच्छ | मत्स्य |
| 129 | 8 | महा त्वङ्ग त् | त्वङ्गत्तुरङ्गौघ |
| 120 | 9 | अषस्यत् | अपश्यत् |
| 121 | 5 | खावकीर्ण | रवावकर्णनैः |
| 121 | 15 | कुतुकंदिदृक्षव | कुतुकं दिदृक्षवः |
| 122 | 3 | नाशीर | नासीर |
| 122 | 4 | शिबिरस्यपृष्ठतः | शिबिरस्य पृष्ठतः |
| 122 | 8 | खावकीर्णनै | रवावकर्णनैः । |
| 123 | 2 | पुर स्थितस्य | पुरः स्थितस्य |
| 123 | 7 | ध्वजिनी पयोनिधिं | ध्वजिनीपयोनिधिं |
| 123 | 17 | विसारणा | विसारिणा |
| 124 | 16 | चान्विष्यपरस्परं | चान्बिष्य परस्परम् |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधितम् |
|---|---|---|---|
| 125 | 11 | अनुपढं | अनुपदम् |
| 126 | 18 | निधिं | निधिम् |
| 127 | 7 | नयोद्धुमर्हंसी- | न योद्धुमर्यंसी- |
| 127 | 17 | सारथिः ध्वजातपत्र | सारथिध्वजातपत्र- |
| 128 | 10 | ....रप्यमा द्रवत् | ....रप्यपाद्रवत् । |
| 131 | 8 | व्यजह्रिरे | विजह्रिरे |
| 135 | 10 | आर्ा | आर्य- |
| 142 | 9 | विश्वम्भभरा | विश्वम्भरा |



# OUR NEW SANSKRIT PUBLICATIONS

| | | | Rs. |
|---|---|---|---|
| 1 | Bharatarnavam | .... | 100 |
| 2 | Gita Govindam | .... | 25 |
| 3 | Brahadeeswara Mahatmyam | .... | 43 |
| 4 | Kantimati Parinayam | .... | 36 |
| 5 | Mantra Sastra Sangraha | .... | 45 |
| 6 | Prapancha Sara Sara Sangraha Part I | | 120 |
| | Part II will be released soon | | |
| 7 | Maruti Vijaya Champu | .... | 30 |
| 8 | Prayoga Ratnamala | .... | 55 |
| 9 | Paramahamsa Charya | .... | 60 |
| 10 | Rajamriganka (Ayurvedic Text) | .... | 45 |
| 11 | Risya Sringa Samhita - Part I | | 100 |
| 12 | ,, - Part II | | 145 |
| 13 | Sarabharaja Vilasam | .... | 15 |
| 14 | Uddharakosam | .... | 23 |
| 15 | Yaska's Niruktam - Part I | .... | 85 |
| 16 | ,, - Part II | .... | 100 |

मुकुन्दविलासगतश्लोकानां

## ॥ अनुक्रमणिका ॥

# AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. you can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this World-famous 'Sarasvati Mahal Library'. It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

DIRECTOR,
Sarasvati Mahal Library, Thanjavur.

